मनुभिर्बहुभिर्युक्तां दैवतैश्चापि तत्समम् ।
कृतत्रेतादिकल्पैश्च शरदं ब्रह्मणो यथा ॥ १० ॥

निजसङ्केतमार्गज्ञैरधिगम्यां पृथग्विधैः ।
यन्त्रैर्दूरीकृतानर्थां दुर्गभूमिमिवापराम् ॥ ११ ॥

निर्गतद्वापरां धर्मतनयस्वर्गयोगतः ।
कलिप्रसङ्गकटुकां कालस्येह गतिर्यथा ॥ १२ ॥

पादैश्चतुर्भिर्नात्यर्थं भिन्नार्थप्रसवैर्युताम् ।
चतुर्युगक्रमायत्तां वैधसीमिव कल्पनाम् ॥ १३ ॥

एकामपि पृथग्लक्ष्यपूर्वार्धापरलक्षणाम् ।
मूर्तिं विनायकस्येव गजवक्त्रां नराकृतिम् ॥ १४ ॥

महेन्द्रजालविज्ञानप्रपञ्चजननीं यथा ।
तद्विदां प्रत्ययावेद्यां मुक्तिदां शक्तिमैश्वरीम् ॥ १५ ॥

+ + + + + + क + + + म + विभागतः ।
मोक्षप्रसाधनीं तत्तत्कर्मावेद्यां[1] त्रयीमिव ॥ १६ ॥

सप्रयोगा हि मनवः साङ्गदैवपुरस्क्रियाः ।
सच्छन्दोमुनिदिग्बन्धाः सध्यानाः सप्रयोजनाः ॥ १७ ॥

सविधानाश्च लक्ष्यन्ते मन्त्रास्ते स्युश्चतुर्विधाः ।
बीजानि बीजमन्त्राश्च मन्त्रा मालाख्यमन्त्रकाः ॥ १८ ॥

नानाक्षराणां संयोगाद् बीजं स्याद्वैकमक्षरम् ।
बीजमन्त्रा दशार्णाधो मन्त्राः स्युर्विंशतेरधः ॥ १९ ॥

विंशत्यर्णाधिका ये तु मालामन्त्रा भवन्ति ते ।
प्रायेण बाल्ये बीजानि सिद्धिं यच्छन्ति भूयसीम् ॥ २० ॥

बीजमन्त्रास्तु कौमारे मन्त्रा यौवनसिद्धिदाः ।
वार्द्धकेऽपि च सिध्यन्ति मालामन्त्राः सदैव हि ॥ २१ ॥

श्रद्धाभक्तिसमभ्यासात् सर्वे सिध्यन्ति सर्वदा ।
मननत्राणधर्मित्वं वाचके दैवतस्य तु ॥ २२ ॥

---

1. 'माद्वेद्यां' ग. पाठः.

यत्र तन्मन्त्रसंज्ञं स्यान्न तद् बीजेषु वा भवेत् ।

अत्र रत्नत्रये —

"मननात् सर्वभूतानां त्राणात् संसारसागरात् ।
मन्त्ररूपा हि तच्छक्तिर्मननत्राणधर्मिणी ॥" इति ।

वाच्यवाचकयोरैक्यमधिगम्य गुरावपि ॥ २३ ॥
तद् दैवतसमां भक्तिं विदधीतात्मसिद्धये ।
लिपिर्वै सर्वमन्त्राणां शब्दानां चैव मातृका ॥ २४ ॥
सा तु शक्तेः समुत्पन्ना शक्तिबीजात्मिका मता ।
निर्विकल्पात्मकं ब्र(ह्म) यन्नित्यानन्दविग्रहम् ॥ २५ ॥
शिवं तदचलं विश्वस्वभावं भासकं परम् ।
सुसूक्ष्मं चिद्घनं व्यापि सर्वगं तदणोरणु ॥ २६ ॥
महतोऽपि महच्छुद्धमिच्छाज्ञानक्रियोदयम् ।
आदिसर्गमुखे ज्ञानचिकीर्षायत्नधारणात् ॥ २७ ॥
स्वशक्तिव्यक्तिमाधत्ते[२] प्रदीपः स्वप्रभामिव ।
सत्त्वं रजस्तमश्चै[३]तच्छुक्लरक्तासितप्रभम् ॥ २८ ॥
शक्तिर्भवत्यजा ह्येका विश्वोद्भवविधायिनी ।
सा शक्तिर्बिन्दुतामेति बिन्दुः सोऽपि त्रिधा भवेत् ॥ २९ ॥
बिन्दुर्नादो रवश्चेति स[४] रवोऽव्यक्तमिष्यते ।
अव्यक्तादुदितं तत्त्वं महान्नाम त्रिभेदकम् ॥ ३० ॥
महतश्चाप्यहङ्कारस्त्रेधा स च निगद्यते ।
वैकारिकस्तैजसश्च भूतादिरिति चापरः ॥ ३१ ॥
तस्माच्छाक्तादहङ्काराद्धकारो घोषवानभूत् ।

अत्र श्रीकालोत्तरे —

"नादाख्यं यत् परं बीजं सर्वभूतेष्ववस्थितम् ।

---

१. 'मं' ख. पाठः. २. 'त', ३. 'व शुक्ल' ग. पाठः. ४. 'सा' ख. पाठः.

मुक्तिदं परमं दिव्यं सर्वसिद्धिप्रदायकम् ॥
सान्तं सर्वगतं शून्यं मात्राद्वादशभिः स्थितम् ।
ह्रस्वा ब्रह्म समाख्याता दीर्घा ह्यङ्गानि षण्मुखा ॥" इति ।

रत्नत्रयेऽपि —

"स तु शब्दश्चतुर्धा वाग्वैखर्यादिविभेदतः ।
जायते बिन्दुसंक्षोभादनन्तस्यार्थसिद्धये ॥" इति ।

शक्तिर्नादो महामाया व्योमेति च चतुर्विधम् ॥ ३२ ॥

बिन्दोरेवास्य तु पुनश्चतस्रो वृत्तयः स्मृताः ।
वैखरी मध्यमा चैव पश्यन्ती चापि सूक्ष्मया ॥ ३३ ॥

व्युत्क्रमेण भवन्त्येताः कुण्डलिन्यादितः क्रमात् ।
सूक्ष्मा कुण्डलिनीमध्ये ज्योतिर्मात्रात्यणीयसी ॥ ३४ ॥

अश्रोत्रविषया तस्मादुद्गच्छन्त्यूर्ध्वगामिनी ।
स्वयंप्रकाशा पश्यन्ती सुषुम्नासमाश्रिता भवेत् ॥ ३५ ॥

सैव हृत्पङ्कजं प्राप्य मध्यमा नादरूपिणी ।
अन्तःसञ्जल्पमात्रा स्यादविभक्तोर्ध्वगामिनी ॥ ३६ ॥

सैवोरःकण्ठताल्वस्था शिरोघ्राणद्विजोपगा ।
जिह्वामूलोष्ठनिष्ठ्यूता कृतवर्णपरिग्रहा ॥ ३७ ॥

शब्दप्रपञ्चजननी श्रोत्रग्राह्या तु वैखरी ।
हकारः सविकारोऽथ रेफेण समयुज्यत ॥ ३८ ॥

ईकारमभजत् तस्माद् बिन्दुनादविभूषितः ।
शक्तिबीजं हि तद्योगात् प्रपञ्चोत्पत्तिकारणम् ॥ ३९ ॥

हरत्वाच्च हरित्वाच्च पुंप्रकृत्योस्तु युक्तयोः ।
श्लिष्टोच्चारितयोः शाब्दं रूपं तद्बीजमीरितम् ॥ ४० ॥

हकारस्तु भवेत् प्राणो रेफो वह्निरुदाहृतः ।
ईकारस्तु भवेन्माया बिन्दुरीश्वर उच्यते ॥ ४१ ॥

नादः सदाशिवो ज्ञेयो नादान्तस्तु शिवः स्वयम् ।
हकारो व्यक्तिमापन्नो हार्दघोषविवक्षितः ॥ ४२ ॥

अकारतां गतस्तस्य भेदो ह्यक्षरसङ्गतिः ।
ऊकारान्तान्यकारादीन्यक्षराणि षडस्य तु ॥ ४३ ॥

विकृतिः स्याद् विशेषेण रेफस्य तु ऋ ॠ ऌ ॡ ।
ईकारभेदतस्त्वासन्नेकाराद्यक्षराणि षट् ॥ ४४ ॥

इत्थं षोडशधोत्पन्नाः स्वराख्याः[1] शक्तिबीजतः ।
शक्त्यङ्गत्वात् कलास्ते स्युरमृतांशुकलात्मकाः ॥ ४५ ॥

ह्रस्वाः स्वरा बिन्दुयुताः पुमांसोऽग्न्यर्करूपिणः ।
दीर्घस्वरा विसर्गान्ताः स्त्रीलिङ्गाः सोमरूपिणः ॥ ४६ ॥

ऋॠऌॡचतुष्कं तु सौम्याग्नेयं नपुंसकम् ।
स्वराणामुदयाद्यं तु पुरस्तादिह लिख्यते ॥ ४७ ॥

इति स्वराधिकारः ।

---

हकारः शब्दगुणवानकारमसृजत् पुरः ।
व्योम्नः स्पर्शगुणो वायुः स्पर्शाख्याः कादयोऽभवन् ॥ ४८ ॥

पञ्चपञ्चाक्षरास्ते स्युः पञ्चवर्गास्त्विनात्मकाः ।
याद्यक्षरचतुष्कं तु वाय्वग्निक्ष्माम्भसां तनुः ॥ ४९ ॥

स्पर्शो रूपं तथा गन्धो रसाख्यस्तद्गुणाः[2] क्रमात् ।
शेषास्तु व्यापकाः शाद्याः साग्नीषोमाः स्वरस्पृशः ॥ ५० ॥

इत्थं पञ्चाशदुत्पन्ना वर्णाः शक्तिप्रभेदतः[3] ।
कादयः पञ्चविंशार्णा यादयः शादयस्तथा ॥ ५१ ॥

स्थानप्रयत्नभेदेन जायन्ते खल्वकारतः ।
अकारादिस्वरैर्युक्तहलां योगान्मिथोऽपि च ॥ ५२ ॥

---

१. 'उं' ख. पाठः.　२. 'द्य', ३ 'राः शक्तिप्रभेदतः' ग. पाठः.

शब्दप्रपञ्चः सर्वोऽपि विचित्रं जायते स्फुटम् ।

हलामधिकारः ।

---

सैव शक्तिर्द्विधा भूता तारो वाग्भवमित्यपि ॥ ५३ ॥

अकारश्चाप्युकारो[1]ऽथ मकारो बिन्दुनादवान् ।
ताराख्यः प्रणवो ह्येष[2] शब्दब्रह्मात्मको मतः ॥ ५४ ॥

अईमबिन्दुनादाढ्यं वाग्भवं बीजमीरितम् ।
विश्ववाग्[3]भूतिदं तत्तु वागीश्वर्यास्तनुर्भवेत् ॥ ५५ ॥

प्रणवस्तु शिवः साक्षाद् वाग्भवं शक्ति[4]रैश्वरी ।
शक्तिबीजं तथा तारो वाग्भवं च ततः परम् ॥ ५६ ॥

अकारादीनि पञ्चाशदक्षराण्यनुपूर्वशः ।
तद्भेदजाश्च या वाचो देशभाजा विलक्षणाः ॥ ५७ ॥

वेदाः साङ्गाः पुराणानि शास्त्राणि विविधानि च ।
आकाशादीनि भूतानि तन्मात्राणीन्द्रियाणि च ॥ ५८ ॥

मनो बुद्धिरहङ्कारो रागः कालः कलास्तथा ।
बहुना किं प्रलापेन यः शब्दार्थात्मकोऽखिलः ॥ ५९ ॥

प्रपञ्चः शक्तिजो ह्येष शक्तिस्तस्मात्तु मातृका ।
अस्यां तु मातृकाख्यायां लिपित्वं लिख्यते यतः ॥ ६० ॥

अक्षरत्वं क्षराभावाद् वर्णत्वं वर्णसङ्ग्रहात् ।
अर्णत्वममृतात्मत्वादर्णोऽम्भः कथ्यते यतः ॥ ६१ ॥

खानिलाग्न्यब्धरित्र्याख्या हयरेफा वलावपि ।
उपादानानि विश्वात्ममातृकायास्तु पञ्च वै ॥ ६२ ॥

अवर्गोऽस्या मुखं साङ्गं कचवर्गौ भुजद्वयम् ।
टतवर्गौ तथा पादौ पार्श्वयुग्मं पफौ मतौ ॥ ६३ ॥

---

१. 'रश्च म', २. 'ज्ञेयः श' ग. पाठः. ३. 'भा' ख. पाठः. ४. 'री' ग. पाठः. ५. 'सा' ख. पाठः.

पृष्ठं बकारो नाभिस्तु भकारो हृन्मकारतः।
त्वगसृङ्मांसमेदोऽस्थिमज्जाशुक्लानि यादयः ॥ ६४ ॥
धातवः सप्त वर्णाः स्युर्हकारः प्राण इष्यते।
स्फूर्तिः क्षकारः सक्रोधो विश्वलोकमयी तनुः ॥ ६५ ॥
भूराद्याः सप्त ये लोकाः पातालानि च सप्त वै।
ब्रह्मादिस्तम्बपर्यन्तं मातृकायां व्यवस्थितम् ॥ ६६ ॥
सूर्याद्यास्तु ग्रहाः सप्त वर्गेभ्यः पृथगुद्गताः।
अवर्गादुद्गतः सूर्यः कवर्गादपि भूसुतः ॥ ६७ ॥
चवर्गाद् भार्गवो ज्ञस्तु टवर्गाद् ता(लि? दि)काद् गुरुः।
पवर्गाच्च शनिश्चन्द्रो यवर्गादभवद् विभुः ॥ ६८ ॥
नक्षत्राण्याश्विनादीनि मेषाद्या राशयस्तथा।
मातृकाक्षरसम्भेदात् कथ्यन्ते परतोऽत्र वै ॥ ६९ ॥
पञ्चाशदक्षरेभ्यस्तु पञ्चाशद् रुद्रमूर्तयः।
समुद्गतास्तथा रुद्रशक्तयस्तत्प्रसंख्यया ॥ ७० ॥
विष्णुमूर्तिविशेषाश्च तावत्यो विष्णुशक्तयः।
ओषध्यश्चापि पञ्चाशदष्टत्रिंशत् कलास्तथा ॥ ७१ ॥
तारात् पञ्चप्रभेदात् तु पञ्चाशदभवन् कलाः।
एवं हि मातृकोत्पत्तिरागमोक्ता प्रदर्शिता ॥ ७२ ॥
प्रपञ्चसारकथिता यथावदिह सङ्ग्रहात्।
अत्रोद्ध्रियन्ते बीजानि बीजमन्त्राः समन्त्रकाः ॥ ७३ ॥
उद्धारव्यत्ययादि स्यान्मालामन्त्रेषु कल्पना।
ततः परं यथापाठं विज्ञेया निपुणैः स्फुटम् ॥ ७४ ॥
हुंफट् वषट् नमो वौषडङ्गानि परिवारकाः।
यथावदत्र लिख्यन्ते भगवच्छब्दसंयुताः ॥ ७५ ॥
युक्ताक्षराणि च स्पष्टं स्वाहाकारे च ठद्वयम्।
दण्डार्धेन्दुर्भवेद्[२] बिन्दुः सर्गो बिन्दुद्वये मतः ॥ ७६ ॥

---

'तप्र' ग. पाठः. २. 'द्वेन्दू भवे' ख. पाठः.

मन्त्रास्तु मनवः ख्याताः ककारो ब्रह्मसंज्ञितः ।
विषकालौ मकारः स्याद् धातवो यादयो मताः ॥ ७७ ॥

त एव मरुदग्नीलाम्भांसि वान्ता भवन्ति हि ।
खः प्राणभुवनेशाख्यो हकारः शिवसंज्ञितः ॥ ७८ ॥

कचवर्गौ टतौ तद्वद् व्यत्यस्तौ हि परस्परम् ।
पफबाश्च भमक्षाश्च व्यत्ययं ते त्रयस्त्रयः ॥ ७९ ॥

यशवर्गौ मिथस्तद्वद् वेद्यौ व्यत्यस्तवर्णकौ ।
स्वरेषु व्यत्ययो नेष्टस्तद्वद् युक्ताक्षरेष्वपि ॥ ८० ॥

श्रीकण्ठाद्याश्च ये रुद्रा न्यासस्थानानि वा लिपेः ।
तत्तदक्षरविज्ञप्त्यै सङ्केताय भवन्ति हि ॥ ८१ ॥

संख्यास्तुतगणो[1] देवा भूतानि भुवनानि च ।
यथासङ्ख्यं तथा विद्यात् स्वराः सप्त दिशो दश ॥ ८२ ॥

बाणास्तु पञ्च वै सप्त समुद्रा मुनयस्तथा ।
वेदाश्चत्वार एव स्युस्त्रयो रामास्त्रयोऽग्नयः ॥ ८३ ॥

नन्दास्तु नव चत्वारो युगा वेद्या रसाश्च षट् ।
उक्तात्युक्ता तथा मध्या प्रतिष्ठा सुप्रतिष्ठिता ॥ ८४ ॥

गायत्र्युष्णिगनुष्टुप् च बृहती पङ्क्तिरेव च ।
तृष्टुप् च जगती तद्वत् ततोऽतिजगती मता ॥ ८५ ॥

शक्करी चातिशक्कर्या ह्यष्टिरत्यष्टिरेव च ।
धृतिश्चातिधृतिश्चैव कृतिः प्रकृतिराकृतिः ॥ ८६ ॥

विकृतिः संकृतिश्चैव प्रोक्ताभिकृतिरुत्कृतिः ।
एतासां छन्दसां संख्या काचिदत्र विधीयते ॥ ८७ ॥

तत्त्वसंख्या भवेद् यत्र ग्राह्यं षट्त्रिंशदेव हि ।
तथा षट्त्रिंशदेव स्युः शैवे तत्त्वानि संख्यया ॥ ८८ ॥

---

१. 'स्त्वतुगुणो' ख. पाठः.

कटपायचतुर्वर्गा नञसन्धिस्वरैर्मृतैः ।
नवभिर्नवपञ्चाष्टवर्णैः संख्यात्र[1] वा भवेत् ॥ ८९ ॥

सङ्केताधिकारः ।

---

इत्ययं वस्तुनिर्देशो ग्रन्थेऽस्मिन् विदितो यथा ।
सुखावबोधो ह्यर्थानां भवत्येवेष्टसिद्धये ॥ ९० ॥

शब्दब्रह्म यदेकमक्षरमजं चैतन्यमात्रं यतो
विश्वोत्पत्तिविनाशपालनविधौ[2] नित्योत्थिता मूर्तयः ।
यस्मादक्षरविग्रहा भगवती जाता स्वयं मातृका
तच्छाक्तं प्रणवाख्यबीजमखिलं न्यग्रोधबीजं विदुः ॥ ९१ ॥

इति श्रीमदीशानशिवगुरुदेवमिश्रविरचिते[3] तन्त्रसारपद्धतौ
वस्तुनिर्देशमातृकोपपत्तिनिर्णयो नाम
प्रथमः पटलः ।

---

अथ द्वितीयः पटलः ।

श्रीकण्ठोऽनन्तसूक्ष्मौ च त्रिमूर्तिरमरेश्वरः ।
अर्घीशो भारभूतिश्च[4] तिथीशः स्थाणुको हरः ॥ १ ॥

झण्टीशो भौतिकः सद्योजातश्चानुग्रहेश्वरः ।
अक्रूरश्च महासेनः षोडशैते स्वरेश्वराः ॥ २ ॥

अथ क्रोधेशचण्डेशपञ्चान्तकशिवोत्तमाः ।
एकरुद्रश्च कूर्मैकनेत्रौ च चतुराननः ॥ ३ ॥

अजेशशर्मसोमेशास्त्रयो लाङ्गलिदारुकौ ।
अर्धनारीश्वरश्चोमाकान्तश्चाषडिडिण्डिनौ ॥ ४ ॥

अत्रिमीनौ च मेषश्च लोहितोऽथ शिखी तथा ।
छगलण्डो द्विरण्डश्च महाकालोऽथ पालिना[5] ॥ ५ ॥

---

१. 'य', २. 'कृतो नि', ३. 'न गुरुदेवपद्धतौ तन्त्रसारे वस्तु' ग. पाठः
४. 'श्चा' ख पाठः. ५. 'न्तोऽथ ष' ग. पाठः.

भुजङ्गश्च पिनाकी च खड्गीशो बक एव च ।
ततः श्वेतो भृगुश्चैव तथैव लकुलीश्वरः ॥ ६ ॥
अन्त्यः संवर्तकाख्यः स्याद् रुद्राः पञ्चाशदीरिताः ।

रुद्राधिकारः ।

---

पूर्णोदरी च विरजा तृतीया शाल्मली भवेत् ॥ ७ ॥
लोला च वर्तुलाक्षी च दीर्घघोणा[1] ततो भवेत् ।
सुदीर्घमुखिगोमुख्यौ दीर्घजिह्वा ततो भवेत् ॥ ८ ॥
कुण्डोदरी चोर्ध्वकेशी तथैव विकृतानना ।
ततो ज्वालामुखी चोल्कामुखी श्रीमुख्यथो भवेत् ॥ ९ ॥
विद्यामुखी च कथिताः षोडश स्वरशक्तयः ।
महाकालीसरस्वत्यौ सर्वसिद्धाद्यगौर्यथा ॥ १० ॥
[3]ततस्त्रैलोक्यविद्या स्याद् मन्त्रशक्त्यात्मशक्तिके ।
भूतमाता भवेत् पश्चात् ख्याता लम्बोदरी ततः ॥ ११ ॥
[4]द्राविणी नैगरा चैव खेचरी चापि मञ्जरी ।
रूपिणी वीरिणी[6] चैव कोटरी[7] पूतना तथा ॥ १२ ॥
भद्रकाली गोमिनी च शङ्खिनी गर्जिनी ततः ।
कालरात्रीकपर्दिन्यौ परतः कर्षणी मता ॥ १३ ॥
महाज्ञाना जया चैव सुमुखा रेवती ततः ।
माधवी वारुणी चैव वायवी परतो भवेत् ॥ १४ ॥
रक्षोवधारिणी चान्या ततस्तु सहजा भवेत् ।
लक्ष्मीर्माया च पञ्चाशदेता वै रुद्रशक्तयः ॥ १५ ॥

रुद्रशक्तयः ।

---

केशवः प्रथमा मूर्तिस्ततो नारायणाह्वयः ।
माधवस्त्वथ गोविन्दो विष्णुश्च मधुसूदनः ॥ १६ ॥

---

१. 'घो' ख. पाठः. २. 'मना।', ३. 'शक्तित्रैलो' ४. 'व', ५. 'मगरा', ६. 'चिरणी', ७. 'रोहिनी पू' ग. पाठः.

त्रिविक्रमो वामनश्च श्रीधराख्यो हृषीकराट् ।
पद्मनाभो दामोदरो वासुदेवस्ततो भवेत् ॥ १७ ॥
सङ्कर्षणश्च प्रद्युम्नोऽनिरुद्धश्च स्वराधिपाः ।
ततश्चक्री गदी शार्ङ्गी खड्गी शङ्खी हली तथा ॥ १८ ॥
मुसली शूलिना पाशी तथा स्यादङ्कुशी ततः ।
मुकुन्दो नन्दजो नन्दी नरो नरकजिद्धरिः ॥ १९ ॥
कृष्णः सत्त्वः सात्त्वतश्च शौरिः शूरो जनार्दनः ।
भूधरो विश्वमूर्तिश्च वैकुण्ठपुरुषोत्तमौ ॥ २० ॥
बली बलानुजो बालो वृषघ्नश्च वृषस्तथा ।
हंसो वराहो विज्ञेया[1] नृसिंहश्चेति विष्णवः ॥ २१ ॥

विष्णुमूर्त्यधिकारः ।

---

कीर्त्तिः कान्तिस्तु[2]ष्टिपुष्टी धृतिः शान्तिः क्रिया(तथाऽदया) ।
मेधा च हर्षिणी श्रद्धा लज्जा लक्ष्मीः सरस्वती ॥ २२ ॥
प्रीतिरत्यौ स्वराणां तु शक्तयः स्युरिमाः क्रमात् ।
जया दुर्गा प्रभा सत्या चण्डा वाणी विलासिनी ॥ २३ ॥
विजया विरजा विश्वा विमदा नन्दना स्मृतिः ।
ऋद्धिः समृद्धिः सिद्धिश्च बुद्धिर्भक्तिर्मतिः क्षमा ॥ २४ ॥
रमोमा क्लेदिनी क्लिन्ना वसुदा वसुधा पै[3]रा ।
परा परायणा सूक्ष्मा सन्ध्या प्रज्ञा प्रभा निशा ॥ २५ ॥
अमोघा चेति पञ्चाशद्वर्णोक्ता[4] विष्णुशक्तयः ।

विष्णुशक्त्यधिकारः ।

---

ओषध्योऽप्यथ चन्दनद्वयलघूकर्पूरकौशीररु-
ग्ध्रीबेराणि तकोलजातिसहिता मांसीमुरं चोरकम् ।

---

१. 'यो', २. 'स्तथा पु', ३. 'व' ग. पाठः. ४. 'त्था' ख. पाठः.

ग्रन्थी भास्करवर्तिनी च कथिता ह्यश्वत्थबिल्वौ गुहा-
रक्तश्चापि लवङ्गकुम्भिसहिता वन्दिन्यथोदुम्बरः ॥ २६ ॥
काश्मर्यम्बुदशङ्खपुष्पिशिखिनीप्लक्षाग्निमन्थास्तथा
सिंहीदर्भकुशापराजितयुतः स्याद् रोहिणो डुण्डुकः ।
ख्याता स्याद् बृहती च पाटलतरं चैत्रातुलस्यावपा-
मार्गः शक्रलतामधुव्रतहरिक्रान्तामुसल्योऽपि च ॥ २७ ॥
स्याद् भीता हरितालिका हरिवधूस्तद्वत् सहा श्रीलता
भद्रा चेति यथाक्रमेण तु लिपेरोषध्य उक्तास्त्विमाः ।
याभिः स्याद् गुलिकाकषायभसितैरालेपनस्नापना-
ल्लक्ष्मीर्वाग्विभवोऽपमृत्युविजयो रक्षाकरं पावनम् ॥ २८ ॥

लिप्योषध्यधिकारः ।

---

अमृता मानदा पूषा तुष्टिपुष्ट्यौ रतिर्धृतिः ॥ २९ ॥
शशिनी चन्द्रिका कान्तिर्ज्योत्स्ना श्रीः प्रीतिरङ्गना[२] ।
पूर्णा पूर्णामृता चेति कलाः स्युः स्वरसम्भवाः ॥ ३० ॥
तपनी तापनी धूम्रा मरीचिर्ज्वालिनी रुचिः ।
सुषुम्ना भोगदा विश्वा बोधनी धारणी क्षमा ॥ ३१ ॥
कादिद्वादशवर्णानां ठान्तानां क्रमशः कलाः ।
धूम्रार्चिरूष्मा ज्वलिनी ज्वालिनी विष्फुलिङ्गिनी ॥ ३२ ॥
सुश्रीः सुरूपा कपिला हव्यकव्यवहे तथा ।
याद्यर्णयुक्ताः कथिता दशैतास्[३]तु कलाः क्रमात् ॥ ३३ ॥

अष्टात्रिंशत्कलाधिकारः ।

---

पञ्चभेदस्य तारस्य पञ्चाशदभवन् कलाः ।
सृष्टिश्चर्द्धिः स्मृतिर्मेधा कान्तिर्लक्ष्मीर्धृतिः[४] स्थिरा ॥ ३४ ॥

---

१. 'म्ला', २. 'दा' ग. पाठः. ३. 'वैता क' ख. पाठः. ४. 'द्यु' ग. पाठः.

स्थितिः सिद्धिरकारोत्थाः कला दश समीरिताः ।
ऋग्वेदब्रह्मसृष्ट्यर्थाः[1] प्रपञ्चे कथितं यथा ॥ ३५ ॥
जरा च पालिनी शान्तिरैश्वरी रतिकामिके ।
वरदाह्लादिनी[2] प्रीतिर्दीर्घा चोकारजाः कलाः ॥ ३६ ॥
यजुर्विष्णुसमायुक्ता जगतः स्थितिहेतवः ।
तीक्ष्णा रौद्रा भया निद्रा तन्द्री क्षुत् क्रोधनी क्रिया ॥ ३७ ॥
उत्कारिका[3] च मृत्युश्च मकारप्रभवाः कलाः ।
सरुद्रसामवेदार्त्ताः[4] ख्याताः संहृतये कलाः ॥ ३८ ॥
पीता श्वेतारुणा गौरी बैन्दवाः सूर्यदेवताः ।
चतस्रः साथर्ववेदाः सेश्वराः सर्वकामदाः ॥ ३९ ॥
निवृत्तिश्च प्रतिष्ठा च विद्या शान्तिस्तथैव च ।
इन्धिका दीपिका चैव रेचिका मोचिका ततः ॥ ४० ॥
सूक्ष्मासूक्ष्मामृताज्ञाना मृता चाप्यायनी ततः ।
व्यापिनी व्योमरूपा च अनन्ता चापि नादजाः ॥ ४१ ॥
कलाः षोडश संख्याता भुक्तिमुक्तिप्रदायिकाः ।
सदाशिवात्मिकास्त्वेताः[5] सामान्येन व्यवस्थिताः ॥ ४२ ॥

इति प्रणवकलाधिकारः ।

केशान्ते मुखवृत्तेऽक्ष्णोः श्रोत्रयोर्घ्राणयोरपि ।
गण्डयोरोष्ठयोर्दन्तपङ्क्त्योर्मूर्धास्ययोः स्वरान् ॥ ४३ ॥
कवर्गं दक्षिणे हस्ते चवर्गमितरे भुजे ।
टतवर्गौ तथा पद्भ्यां पफौ पार्श्वद्वये न्यसेत् ॥ ४४ ॥
पृष्ठे नाभौ च हृदये न्यसेद् बभमसंज्ञितान् ।
त्वगसृङ्मांसमेदोऽस्थिमज्जाशुक्रासु[6] पङ्कजे ॥ ४५ ॥

---

१. 'ष्ट्युत्थात् प्र', २. 'परताह्ला', ३. 'रीं चैवमत्युप्रा म', ४. 'ख्याः' ग. पाठः. ५. 'ह्ये', ६. 'नि' ग. पाठः.

हृत्स्थे तत्पत्रगान् यादीनष्टार्णानात्मनि न्यसेत् ।
क्षकारं कर्णिकायां तु सर्वेशः संस्मरन् न्यसेत् ॥ ४६ ॥

लिपिन्यासस्थानाधिकारः ।

---

स्थानान्युक्तान्यकारादिवर्णानां क्रमशोऽधुना ।
लिपेर्न्यासविशेषास्तु लिख्यन्ते साङ्गदैवतम् ॥ ४७ ॥
लिप्यर्णैरेव बिन्द्वन्तैर्न्यासः शुद्धलिपेः स्मृतः ।

सञ्जीवनि! ऊर्ध्वकेशिनि! ज्वलितशिखिशिखे![3] त्रैलोक्यैकरूपिणि! सहस्रपरिवर्तिनि! ओं ह्रीं[5] सौं नेत्रत्रयाय वौषट् मारुतवारुणि!

काद्यैः षड्वर्गकैर्युक्तान्यादावङ्गानि षड् लिपेः ॥ ४८ ॥
प्रायः सर्वाङ्गमन्त्राणां हृदयं स्यान्नमोन्तकम् ।
शिरः स्वाहान्तमुद्दिष्टं वषडन्तं शिखा भवेत् ॥ ४९ ॥
अन्ते हुं कवचस्य स्यात् फडन्तं चास्त्रमिष्यते ।
वौषडन्तं तथा नेत्रं नेत्रान्तं त्वेवमीरितम् ॥ ५० ॥
अस्त्रान्ताङ्गविधिः क्वापि तत्रास्त्रान्तं तु विन्यसेत् ।
षडङ्गस्यैव मन्त्रस्य कथ्यते नेत्रकल्पना ॥ ५१ ॥
पञ्चाङ्गस्य मनोस्तस्य नेत्रमन्त्रो न विद्यते ।
प्रागङ्गमन्त्रमुच्चार्य ततोऽङ्गं सचतुर्थिकम् ॥ ५२ ॥
नमःस्वाहादिकं पश्चाद् योजयेदङ्गमुद्रया ।
प्रसारिताङ्गुलिर्हस्ततलं[6] तु हृदये न्यसेत् ॥ ५३ ॥
कुञ्चिताग्राङ्गुलिर्मुक्ताङ्गुष्ठं शिरसि तत् पुनः ।
बद्धमुष्टिनिसृष्टेन त्वङ्गुष्ठाग्रेण वै शिखाम् ॥ ५४ ॥
वपुः स्वमस्पृशन्नूर्ध्वमुत्क्षिप्य तु करद्वयम् ।
आकुञ्चिताङ्गुलोत्तानतलं दक्षिणवामयोः ॥ ५५ ॥

---

१. 'कान्' ख. पाठः. २. 'गं', ३. 'खे! भयात्रै' ग. पाठः. ४. 'क्यस', ५. 'ह्रीं हं सौ ने', ६. 'लिं हस्त' ख. पाठः.

पार्श्वयोरानयेद् रक्षामानाभेः कवचं तु तत् ।
तावेवाकण्ठमुत्क्षिप्य करौ सङ्कुचिताङ्गुली ॥ ५६ ॥

ज्येष्ठाग्रक्रान्ततर्जाग्राच्छोटिकोत्सर्जनात् पृथक् ।
अस्त्रं स्यान्नेत्रमुद्रा तु दक्षिणान्मुष्टिबन्धनात् ॥ ५७ ॥

उत्सृष्टानामिकामध्यातर्जाभिः सहसाग्रतः ।
नेत्रत्रयस्पर्शनेन भवेन्नेत्रद्वयं यदि ॥ ५८ ॥

तत्र तर्जनिकामध्यायोगान्नेत्रद्वयं स्पृशेत् ।
शुक्लं पीतं ज्वलज्ज्योतिर्विद्युद्वर्णं हुताशभम् ॥ ५९ ॥

रक्तं चाप्यङ्गषट्कं च सामान्येन पृथक् क्रमात् ।

अङ्काधिकारः ।

मुद्रार्थस्फटिकाक्षसूत्रकलशांश्चाबिभ्रती पुस्तकं
हस्तैर्दक्षिणपूर्वकैस्त्रिणयना शुक्लस्रगालेपना ।
कुन्दाभाक्षरविग्रहा शशिकलां मौलौ प्रसन्नानना
धत्ते या लिपिदेवताम्बुजगता मुक्ताभरालङ्कृता ॥ ६० ॥

पञ्चाशद्वर्णमूर्तिं तामेवं ध्यात्वा स्वविग्रहे ॥ ६१ ॥

स्थानेषु क्रमशो न्यस्य पूर्वोक्तेषु जपेल्लिपिम् ।
पञ्चाशत्संख्यया नित्यं यावल्लक्षं प्रपूर्यते ॥ ६२ ॥

तिलैस्त्रिमधुराक्तैस्तु हुत्वा शक्त्यनुरूपतः ।
वाग्विशुद्धिमसौ विन्देत् कविता चास्य जायते ॥ ६३ ॥

ग्रन्थतत्त्वार्थविद् विद्वान् प्राज्ञो नीरोगविग्रहः ।
संसाध्यैवं लिपिं देवीं सिद्धसर्वमनुर्भवेत् ॥ ६४ ॥

शुद्धलिपिः ।

सरुद्रांस्तु जपेद् वर्णान् प्राग्वद् विन्यस्य तु क्रमात् ।
न्यासः श्रीकण्ठपूर्वोऽसौ क्षुद्ररोगादिशान्तिदः ॥ ६५ ॥

---

१. 'णो मुष्टि', २. 'नम्' ३. 'क्ष' ग. पाठः. ४. 'ला' ख. पाठः. ५. 'स' ग. पाठः.

मं मं अं अं आं आं कं[1] व च इं[2] र क्ष

हृल्लेखाव्योमसौपूर्वम[3]मून्यङ्गानि षट् क्रमात् ।

श्रीकण्ठादि ।

---

लिप्यर्णानि सबिन्दूनि रुद्रशक्तिविभक्तिहृत् ॥ ६६ ॥

युक्तानि विन्यसेदेष श्रीकण्ठादिः सशक्तिकः ।

अङ्गानि प्राक्तनान्येवं तुल्यान्यस्यापि कल्पयेत् ॥ ६७ ॥

न्यासयोरनयोश्छन्दो विराडित्यभिधीयते ।

श्रीब्रह्मा मुनिरुद्दिष्टो वाग्देवी दैवतं भवेत् ॥ ६८ ॥

द्वितीयस्यार्धनारीशो न्यासस्येत्यपि केचन ।

साक्षस्रक्कलशोर्ध्वबाहुयुगलां चाधः समुद्राभयं

हस्तं दक्षिणमन्यतः सवरदे यस्याः करे पुस्तकम् ।

ध्यायेत् तां शशिखण्डमण्डितजटां देवीं त्रिनेत्रां सितां

श्रीकण्ठाद्यधिदेवतां च धवलैराकल्पकैर्भूषिताम् ॥ ६९ ॥

सिन्दूरहेमाभयभार्गवर्णं त्वर्धाम्बिकं साङ्कुशपाशहस्तम् ।

साक्षावलिं स्वेष्टदपाणिमीशं श्रीकण्ठपूर्वं स्मरतु स्वसिद्ध्यै ॥ ७० ॥

सशक्तिश्रीकण्ठन्यासः ।

---

तारं सशक्तिलिप्यर्णैरजपा सोऽहमेव च ॥ ७१ ॥

प्रपञ्चयागन्यासोऽयं न्यासजप्यादिनेष्टदः ।

लकुली बिन्दुमान् सर्गी भृगुश्चाप्यजपामनुः ॥ ७२ ॥

ऋषिर्ब्रह्मास्य गायत्री छन्दः स्याद् देवतापि च ।

परमात्मा परं ज्योतिर्ध्येयः स्वहृदयाम्बुजे ॥ ७३ ॥

सशक्तिठद्वयं हृत् स्याच्छिरः सोऽहमिहोच्यते ।

---

१. 'क च' ग. पाठः. २. 'इं ई क्ष क्ष' ख. पाठः. ३. 'र्वा', ४. 'षु',
५. 'ले' ग. पाठः. ६. 'र्णसार्धा' ख. पाठः.

अजपा तु शिखा ज्ञेया वर्मैव कवचं स्मृतम् ॥ ७४ ॥
तार एव तु नेत्राणि हरीशार्णाविहास्त्रकम् ।
कर्णस्तु हरिबीजं स्याद् विषमीशाक्षरं विदुः ॥ ७५ ॥

ध्येया स्यादभयाक्षसूत्रशुकधृग् या पुस्तकं बिभ्रती
देवी पाण्डुरपुण्डरीकपटलस्वच्छेन्दुकुन्दद्युतिः ।
हृद्याङ्गी मणिकुण्डला त्रिनयना कोटीरभारोज्ज्वला
सार्धेन्दुः सितमाल्यगन्धवसना ब्राह्मी प्रपञ्चेश्वरी ॥ ७६ ॥

प्रपञ्चयागन्यासः ।

शक्त्याद्यैर्वा लिपेर्वर्णैः शक्तिः श्रीपूर्वकैस्तु वा ।
शक्तिः श्रीमन्मथाद्यैर्वा मोमानङ्गादिकैस्तु वा ॥ ७७ ॥
न्यासाः समृद्धिकास्त्वृद्ध्यै मुनिरेषां प्रजापतिः ।
छन्दस्तु दैवी गायत्री मोमानङ्गास्तु देवताः ॥ ७८ ॥
स्वादिबीजैर्यथालिङ्गं षडङ्गानि भवन्ति हि ।
उमादिदेवताः स्मृत्वा न्यासे ध्येया सरस्वती ॥ ७९ ॥

मन्दारदामकलितेन्दुजटाकिरीटा
सिन्दूररोचिरभिरामवपुस्त्रिनेत्रा ।
कुन्दावदातवसनाङ्कुशपाशविद्या-
सन्दोहपङ्कजकरावतु भारती वः ॥ ८० ॥

समृद्धिन्यासः ।

कैलासनस्थो लकुली वामाक्षार्धेशशाङ्कवान् ।
लिप्यर्णोभयगो न्यस्तः क्षोभणीन्यास ईरितः ॥ ८१ ॥
कामारूढस्तु लकुली प्राग्वद् दीर्घस्वरैर्युतः ।
यथालिङ्गं षडङ्गानि छन्दो गायत्रमेव हि ॥ ८२ ॥
वामदेवो मुनिः कामो दैवतं चाक्षरेश्वरी ।

---

१. 'न्दो देवी च गा', २. 'रजाव', ३. 'का' ग. पाठः. ४. 'मरूढास्तु' ख. पाठः.

सिन्दूरारुणसुन्दराङ्गरुचिरा रक्ताम्बरालेपना
मन्दारावृतकुन्तला स्मितमुखी गण्डोल्लसत्कुण्डला ।
ध्येया स्याद् दधती करैः सरसिजं पाशाङ्कुशे पुस्तकं
बिम्बोष्ठी मणिभूषणा भगवती संक्षोभणी भूतये ॥ ८३ ॥

क्षोभणीन्यासः ।

---

पाशश्रीशक्तिमदनैर्लिप्यर्णमदना रेमा ॥ ८४ ॥
लक्ष्म्यङ्कुशकलाद्वद्भिर्युक्तो न्यासस्तु मालिनी ।
अनन्तो बिन्दुमान् पाशः श्रीबिन्द्वन्ताः स्वयं मनुः ॥ ८५ ॥
ब्रह्मा समांसवामाक्षदण्डो बीजं तु मान्मथम् ।
शक्तिः ख्याता तु कः साग्निदन्ताबिन्दुस्तथाङ्कुशम् ॥ ८६ ॥
कलास्त्वक्षरजा ग्राह्याः पञ्चाशत् प्रणवोदिताः ।
वीप्सितानि स्वबीजानि सर्गी संवर्तकश्च षट् ॥ ८७ ॥
अङ्गान्यमूनि मालिन्याश्छन्दश्चोष्णिगृषिर्गुहः ।
देवतास्य जगन्माता देवी त्रिपुरभैरवी ॥ ८८ ॥
न्यासश्चानेन होमश्च मधुरैः[3] सर्वसिद्धिदः ।
जपध्यानादिना सद्यः सर्वानाकर्षयेदपि ॥ ८९ ॥

बन्धूकारुणविग्रहां त्रिनयनां रक्ताम्बरालेपनां
चञ्चत्काञ्चनकुण्डलां सवरदां पाशाङ्कुशे बिभ्रतीम् ।
नीहारामलहारकुङ्कुमरसैराताम्रकम्रस्तनीं
ध्यायेत् तां तु कपर्दचन्द्रशकलां सव्याभयां मालिनीम् ॥ ९० ॥

मालिनीन्यासः ।

---

पाशाङ्कुशाभ्यां पुटितैर्लिप्यर्णैः कर्षणी भवेत् ।
न्यासस्तु कादिषड्वर्गैः पाशाङ्कुशपुटैर्यथा ॥ ९१ ॥
षडङ्गानि भवन्त्यस्यच्छन्दोऽनुष्टुप् प्रजापतिः ।
ऋषिर्वाग्वादिनी दैवं न्यासाद्यैः सर्वसिद्धिदः ॥ ९२ ॥

---

१. 'रांसरु' ग. पाठः. २. 'पुमान् ॥', ३. 'वैं', ४. 'न्यासादि' ग. पाठः.

ध्येया स्याद् रोचनाम्भोद्गतकनकवपुर्वल्लकीपुस्तकाभ्यां
या सा पाशङ्कुशाढ्या मणिगणरुचिरैर्भूषणैर्भूषिताङ्गी ।
कोटीराबद्धमौलौ धृतशशिशकला रक्तगन्धाम्बराद्या
सैक्यं वाग्वादिनीयं त्रिभिरपि नयनैर्भ्रूविलासस्मितास्या ॥ ९३ ॥

वाग्वादिनीन्यासः ।

लिप्यर्णानि सबिन्दूनि केशवाद्याश्च विष्णवः ।
तच्छक्तयश्च क्रमशो न्यस्तव्या स्युर्नमोन्तकम् ॥ ९४ ॥
केशवाद्यै[2]र्भवेन्न्यासो विष्णुमन्त्रेषु[3] सिद्धिदः ।
अष्टाक्षरतनुर्विष्णुर्देवता तमपि[4] स्मरन् ॥ ९५ ॥
न्यसेच्छन्दस्तु गायत्री नारदोऽस्य मुनिर्भवेत् ।
देवी कुन्देन्दुगौरी[5] स्फुरदमृतकलाहारिहाराभिरामा
ध्येया मालेयहृद्यं वपुरपि दधती लेखनीं[6] चाक्षसूत्रम् ।
सौधं कुम्भं च विद्यानिधिमपि जलजं जाटजूटाहितेन्दु-
र्या सा क्षौमाम्बराढ्या त्रिभुवननमिता षट्भुजा सत्रिणेत्रा ॥ ९६ ॥

केशवादिन्यासः ।

एवंप्रकारा गदिता लिपेर्न्यासास्तु सिद्धिदाः ॥ ९७ ॥
एषामेकतरं न्यासमाश्रयेदेव साधकः
न्यस्तलिप्यर्णदेहस्तु जपहोमार्चनादिकम् ॥ ९८ ॥
कुर्यान्मन्त्रात्मरक्षार्थं तथा तत्कर्मसिद्धये ।
न्यस्तां लिपिं ततो ध्यात्वा पूजयेन्मातृकाम्बुजे ॥ ९९ ॥
सप्तवर्गान्त्ययुग्माष्टदिक्पत्रं सितपङ्कजम् ।
बिन्दौ मदग्निरुद्धान्त्यकर्णिकं स्वरकेसरम् ॥ १०० ॥
सप्तार्णवैः परिवृतं पृथ्वीबिम्बेन वेष्टितम् ।
मातृकावर्णपद्माख्यं विषमृत्युजरापहम् ॥ १०१ ॥

---

१. 'री' ख. पाठः. २. 'दि' ग. पाठः. ३. 'ति' ख. पाठः. ४. 'मा', ५. 'रा', ६. 'खि' ग. पाठः.

चिन्तितं तच्छिरस्येव मृत्युक्ष्वेलरुजो हरेत् ।
ध्यात्वा दुग्धाब्धिमध्यस्थं दिव्यस्फटिकमण्डपम् ॥ १०२ ॥

तत्र पीठाम्बुजे ह्यस्मिन् शक्तयोऽष्टौ दलाग्रतः[1] ।
मेधा प्रज्ञा प्रभा विद्या धीर्धृतिस्मृतिबुद्धयः ॥ १०३ ॥

विद्येश्वरी च मध्यस्था शुक्ला शुक्लाम्बरादिकाः ।
कृताञ्जलिद्वयकरास्तथैवोर्ध्वकरद्वये ॥ १०४ ॥

दधत्यः पुस्तकं कुम्भं शान्ताः सुन्दरमूर्तयः ।
विदिक्ष्वङ्गानि दिक्ष्वस्त्रं[2] दलेषु नयनं पुरः ॥ १०५ ॥

ततः स्वराश्च तत्संख्यकलाभिरमृतादिभिः ।
अमृता मानसी तुष्टिः पुष्टिप्रीतिरतिश्रियः ॥ १०६ ॥

शान्तिः सुधा तथा कान्तिर्ज्योत्स्ना हैमवती ततः ।
छाया च पूरणी वामाप्यमा चेन्दुकलास्त्विमाः ॥ १०७ ॥

अमृतासारवर्षिण्यो द्वन्द्वशो दलगाः स्मरेत् ।
ततो वर्गाक्षराणि स्युस्ततो ब्राह्म्यादिमातरः ॥ १०८ ॥

ब्राह्मी माहेश्वरी चैव कौमारी वैष्णवी तथा ।
वाराह्यैन्द्री च चामुण्डी महालक्ष्मीश्च दिक्क्रमात् ॥ १०९ ॥

ततो दश दिगीशाः स्युरिन्द्रोऽग्निर्यम एव च ।
निर्ऋतिर्वरुणो वायुर्धनदेशानकौ ततः ॥ ११० ॥

प्रागादिदिक्षु तेऽष्टौ स्युरथेन्द्रेशानमध्यगः ।
ब्रह्मा स चोर्ध्वलोकेशोऽनन्तो वरुणरक्षसोः ॥ १११ ॥

अधोलोकेश्वरस्त्वेतान् षडावरणगान् यजेत् ।
मध्येऽब्जकर्णिकासंस्थां चेतनात्मतया लिपिम् ॥ ११२ ॥

स्वन्यासोक्ताकृतिं ध्यायेदुपचारैर्यथोदितैः ।
आसनावाहनार्घ्याणि पाद्यं चाचमनीयकम् ॥ ११३ ॥

१. 'गाः' ग. पाठः　२. 'स्त्रं' ख. पाठः

साङ्गोपाङ्गं तथा स्नानं[1]वसनाभरणानि च ।
गन्धपुष्पे तथा धूपो दीपश्चरुनिवेदनम् ॥ ११४ ॥
अग्निकार्यं नमस्कारो राजपूजासमर्पणम् ।

षोडशोपचारः ।

---

एवं स्थण्डिलगामिष्ट्वा मनसा वा समर्चयेत् ॥ ११५ ॥
ऋष्यादीनपि विघ्नेशं गुरुं चाप्युत्तरे यजेत् ।
ततोऽष्टपुष्पिकां कुर्यात् सा चाहिंसा क्षमा दया ॥ ११६ ॥
तथेन्द्रियाणां नियमो ज्ञानं भावविशुद्धता ।
अक्रोधो ध्यानमित्यष्टौ भावपुष्पाण्यनुक्रमात् ॥ ११७ ॥
आसनं चैव तन्मूर्तिर्देवता चाङ्गपञ्चकम् ।
इत्यष्टौ पूजयेन्मन्त्रैः स्यादेवं चाष्टपुष्पिका ॥ ११८ ॥
सिद्धये साधकेन्द्राणां देवतानां प्रसादने ।
प्रचेतव्यानि मन्त्राणां स्फुरणाय विशेषतः ॥ ११९ ॥
क्षमस्वेति ततो देवीं परिवारैश्च तैः सह ।
निरञ्जने लयं गच्छ शिरोन्तं मनुनामुना ॥ १२० ॥
द्वादशान्ताम्बुजस्थेन्दौ योजयेच्चेतनात्मिकाम् ।

लिपिपूजाविधिः ।

---

पूजाक्रमोदितं चक्रभूर्जहेमादिके लिखेत् ॥ १२१ ॥
तद्धारणेन सर्वार्थाः सिद्ध्यन्त्यस्याप्ययत्नतः ।
प्रातस्त्रिवारमनया जपित्वाम्भः पिबेत् सुधीः ॥ १२२ ॥
संवत्सराद् भवेत् प्रज्ञा कविता चास्य जायते ।
अष्टोत्तरसहस्रं तज्जपाद् ब्राह्मीरसं पिबेत् ॥ १२३ ॥
अहोरात्रमविच्छिन्नमथवाप्युपरागयोः ।
पलं श्वेतवचाचूर्णं कर्षं तुरगगन्धिनी ॥ १२४ ॥

---

१. 'जपपू' ख. पाठः.

कृष्णा हारिद्रा सिन्धूत्थं धात्री रुग् विश्वभेषजम् ।
प्रतिनिष्कं तु सञ्चूर्ण्य घृतप्रस्थे विनिक्षिपेत् ॥ १२५ ॥

ब्राह्मीरसचतुष्प्रस्थे पचेन्मृद्वग्निपा[1]कवित् ।
ब्राह्मीघृतमिदं प्राश्नमनयायुतमान्त्रितम् ॥ १२६ ॥

पिबेत् सूर्योपरागे तु सर्वज्ञत्वमवाप्नुयात् ।
दिनादौ वा लिहेन्नित्यं पञ्चाशदभिमन्त्रितम् ॥ १२७ ॥

संवत्सराद् भवेत् प्राज्ञः कविर्विद्व[2]त्सुसम्मतः ।
मध्ये तु मातृकापद्मे लिप्योषध्यम्बुपूरितम् ॥ १२८ ॥

कलशं विधिव[3]न्नित्यं जपेद् दशशतं ततः ।
तेनाभिषिक्तो मासेन वागायुःकान्तिकीर्त्तिभिः ॥ १२९ ॥

अरोगी युज्यते लक्ष्म्या वन्ध्या सूते सुतं[4] शुभम् ।
आधारशक्तिबिन्दूत्थां प्रभां सौषुम्नमार्ग[5]गाम् ॥ १३० ॥

द्वादशान्तेन्दुगां ध्यात्वा तस्यां क्षाद्यक्षरं लिखेत् ।
वह्निसोमाभिसंप्रोता[6]द् रोगान्मुच्येत पातयन् ॥ १३१ ॥

लिपिमिति विदितार्थां विन्यसेदेकमार्गां
गुरुमुखसमवाप्तां तां जपेच्चापि लक्षम् ।
सितकुसुमतिलाज्यैस्तद्दशांशेन हुत्वा
वशयति जगदिष्टं प्राप्तवागीश्वरोऽसौ ॥ २३२ ॥

ग्रहरिपुविषरोगान् विप्लवान् हन्ति चान्यान्
निजवपुषि परे वा न्यासतः स्वार्णसंख्यम् ।
जगति निखिलमन्त्राः साधिताः स्युर्न नूनं
न हि लिपिरभिराद्धा साधयेत् सर्वकामान् ॥ १३३ ॥

इति श्री[7]मदीशानशिवगुरुदेवपद्धतौ तन्त्रसारे
श्रीकण्ठादिपटलो द्वितीयः ।

---

१. 'ना क्वचित्' ग. पाठः. २. 'द्वान् सु' ख. पाठः. ३. 'नापूर्य ज' ग. पाठः. ४. 'तां', ५. 'भाम्' क. पाठः. ६ 'तं', ७. 'मद्गुरुदेवपद्धतौ श्रीकण्ठादिद्वितीयः पटलः । अथ' ग. पाठः.

## अथ तृतीयः पटलः ।

अथ सकलमनूनां मातृका[1] जन्मभूमि-
स्तदधिकृतविशेषा[2] वर्गवर्गादि[3]युक्त्या ।
पृथगिह परिपाट्या लिख्यते च स्वराणा-
मुदयविहतिवर्णैश्चासिराश्यात्मलिङ्गैः ॥ १ ॥

अविदितमनुवर्णप्रक्रियाकार्यरूपः
कथमिह फललिप्सुस्तज्जपादौ प्रवृत्तः ।
गणविषयविभागानौषधानामजानन्
कुभिषगिव चिकित्सालोलुपो बालिशोऽसौ ॥ २ ॥

अविदितगजशिक्षश्चासृणिर्वाधिरोहे-
दविरलमदधाराः संस्रवन्तं गजेन्द्रम् ।
अगणितपरिशुद्धिर्मन्त्रतत्त्वानभिज्ञः
स पतति खलु मूर्खो देशिकः साधको वा ॥ ३ ॥

इति लिपिमनुचक्रव्याक्रियार्थस्त्वतोऽस्मिन्
प्रकटितबहुमन्त्रो देशिकैर्वेदितव्यः ।
अकचटतपयाख्याः सप्त शाख्यश्च वर्ग-
स्त्विह रविशशिवर्णः स्यादवर्गः स्वरात्मा ॥ ४ ॥

पुरुषयुवतिभेदा रौद्रसौम्याः स्वरास्ते
न हि पृथगुदयाः स्युर्ह्रस्वदीर्घाः क्रमेण ।
उदयति रविवर्णे ह्रस्वके दक्षिणस्थे
शशिनि च खलु दीर्घे वामनासापुटेऽर्णे ॥ ५ ॥

नसि पुटयुगलेऽस्मिन्नूर्ध्वमग्निस्तु तिर्यङ्
मरुदुदकमधस्तान्मध्यकुण्ड्यं धरित्री ।
सुषिरमिह हि यत् खं पञ्च भूतानि चैवं
सवितरि च शशाङ्के ते स्वरास्तूदयन्ते ॥ ६ ॥

---

१. 'का', २. 'षं', ३. 'र्ग्यी' ख. पाठः.

उभयमपि च विद्याद् यत्र निश्वासवायुः
प्रसरति समकाये स्वस्थदेहेन्द्रियस्य ।
वदतु च परिपृष्टः कार्यसिद्धिं च हानिं
स्वरमुदितमवेक्ष्य स्वस्य वान्यस्य युक्त्या ॥ ७ ॥

कपिलवकुशरामाः कामनिम्ने निशाङ्गः
पशुरणियमगावः किं वनं संप्ययनाढ्यः ।
क्रमपठितयुगार्णा राशयो द्वादश स्यु-
र्दिनरजनिविभागस्तैस्तु षड्भिश्च षड्भिः ॥ ८ ॥

अजवृषमिथुनाख्याः कर्किहर्यक्षकन्याः
समतुलमलिचापे नक्रकुम्भाह्वमत्स्याः ।
चरनचरयुगास्ते राशयस्त्रिक्रमाः स्युः
सह खलु लिपिवर्णैः श्वासवेद्योदयाद्याः ॥ ९ ॥

उदयति चरराशिर्दक्षिणप्राणसूर्ये[1]
मरुति हि शशिसंज्ञे वामके स्थास्नुराशिः ।
उभयपुटनिसृष्टं चोदयेद् युग्मराशिः[2]
सकलभुवनकालज्ञापकः श्वासचारः ॥ १० ॥

उभयमरुति जीवः सौम्यवायौ जले वा
शशिदहनधरण्यो मारुतो धातुशंसी ।
उभयधरणिसूर्ये चाप्सु मूलं शशाङ्के
पयसि च फलसिद्धिः सूर्यभूम्यप्सु न स्यात् ॥ ११ ॥

कुजमुभयगवह्नौ सूर्यवह्नौ मृतिः स्यात्
सवितृवियति नष्टं स्यान्मृतं वाल्पमायुः ।
वदतु मरुति चन्द्रे दीर्घमायुस्तदद्भिः
सुखमपि शशिभूमौ चाल्पसिद्धिस्तु तत्त्वे ॥ १२ ॥

उभयधरणिरिष्टं साधयेद् दीर्घकाला-
दुभयमरुति किञ्चित्कालपाके स सिद्ध्येत् ।

१. 'णौ दक्षि' ख. पाठः. २. 'यै यु' ग. पाठः.

उभयगगनवह्न्योर्नैव सिद्धिर्न हानि-
मरुदुभयजलस्थः क्षिप्रमल्पेष्टदः स्यात् ॥ १३ ॥
शशिजलधरणिस्थे शान्तिकं पौष्टिकं वा
शशिमरुदनवाभ्यां(?) वश्यमाकर्षणं च ।
दिनकरभुवि कुर्यात् स्तम्भनं त्वर्कतोये
रुजमिनमरुता खे भ्रामणोच्चाटनाभ्याम् ॥ १४ ॥
दिनकरवियति स्यान्मोहनं चार्कवह्नौ
द्रुततरमरिवर्गान् मारयेत् सादयेच्च ।
इति जपहुतविद्याः साधयन् वै यथावत्
स्वरमुदितमपेक्ष्य त्वारभेताशु सिद्ध्यै ॥ १५ ॥

स्वरोदयाधिकारः ।

कचटतपसमाख्याः पञ्चवर्गास्तु धात्री-
मरुदनलखतोयैः संयुतास्तत्र वेद्याः ।
अनिलदहनपृथ्व्यो वारि चाप्यत्र याद्या-
स्त्रिगुणगगनवर्णाः शादयोऽन्त्यस्तु रागः ॥ १६ ॥
कनकरुगमलस्रग्वस्त्रगन्धोऽष्टबाहु-
स्त्रिशिखवरगदाधृक् कूर्मवाहोऽष्टनेत्रः ।
शशधरचतुरास्यो वृत्तपीठे कपर्दी
कुवलयसमगन्धो मन्दराभो ह्यकारः ॥ १७ ॥
धवलरुचिरथाब्जे सूपविष्टा द्विबाहु-
र्गजवरमधिरूढा साङ्कुशा पाशहस्ता ।
तुहिनविमलहारैर्भूषिता षष्टिदीर्घा
त्रिदशविततिराख्या योजनानां पुरन्ध्री ॥ १८ ॥
कुलिशधृगतिपीतं कूर्मवाहं कुबिम्बे
द्विभुजमलसगन्धं योजनद्वन्द्वदीर्घम् ।
स्मरतु विविधमायं विस्तृतं दैर्घ्यतोऽर्धं
रिपुदुरितगदघ्नं स्तम्भनं सूक्ष्मसंज्ञम् ॥ १९ ॥

कनकफलकरा स्त्री पञ्चगव्यूतिवृत्ता
सितरुचिरमृताद्रा हारिहाराभिरामा ।
द्विगुणधरणिबिम्बे हंसगा योजनानां
दशपरिणतमूर्तिः पुष्टिदा स्यात् त्रिमूर्तिः ॥ २० ॥

द्विशतरचितदैर्घ्यं विस्तृतं योजनानां
शतमतिकटुगन्धं काकवाहं द्विहस्तम् ।
अनलभवनसंस्थं ताम्रवर्णं सशूलं
सगदमखिलरक्षां(?)स्यादयुग्मं तु षण्डम् ॥ २१ ॥

द्विभुजमरुणमग्नेर्मण्डल[1]स्थो[2]ष्ट्रवाहं
दशशतविततं तद्वन्द्वदीर्घं त्रियुग्मम् ।
भुजगभुजगवर्गैर्भूषितं दुष्टगन्धं
स्मरतु विषविघाते षण्डकं शक्तिपाशम् ॥ २२ ॥

कुलिशधरमुदग्रं हंसवाहं सपाशं
द्विलपनमतिपीतं पार्थिवाब्जे सुगन्धम् ।
शतविततिल्लि[3]युग्मं त्रिंशदायामि[4] षण्डं
स्मरतु रिपुगणघ्नं स्तम्भनं स्वर्णचूडम् ॥ २३ ॥

रथचरणफलास्यं[5] षण्डकं शङ्खपद्म-
स्फुरितभुजचतुष्कं चन्द्रकीकण्ठनीलम् ।
सुमुखममलहारं पद्मगन्धं कपर्दि
स्मरतु निखिलवश्यं झण्डिनं[6] चक्रवाके[7] ॥ २४ ॥

द्विभुजगरुडवाहां भूषितां वह्निबिम्बे
त्रिशिखकुलिशहस्तां शुक्लवर्णां सुगन्धाम्[8] ।
स्मरतु विमलहारां भौतिकीं वा प्रसूत्यै
प्रविततशतकोटिं योषितं तां तथोच्चाम् ॥ २५ ॥

अखिलभुवनमध्यव्यापकं पीतवर्णं
दशशतभुजयुग्मं द्योतमानं त्रिणेत्रम् ।

---

१. 'ले' ख. पाठः. २. 'स्थाष्ट्रवा', ३. 'ल्ल', ४. 'ति' ग. पाठः. ५ 'द्यं', ६. 'नुज्झिनं', ७. 'कौ', ८. 'न्धिम्' ख. पाठः.

द्विगुणदहनबिम्बे गोवृषे भूषिताङ्गं
पुरुषयुवतिदेहं मुक्तिदं ध्येहि सद्यम् ॥ २६ ॥
सितकुसुमसुगन्धिः शुक्लवासाः सुवर्ण-
द्युतिरपि कुसुमाभो वज्रपाशौ च बिभ्रत् ।
धरणिकमलबिम्बे योजनानां सहस्रं
ततततनुरिह चिन्त्यः पौष्टिकेऽनुग्रहेशः ॥ २७ ॥
घुसृणरुचिरनेकैर्भूषणैश्चित्रिताङ्गो
युगलयुगलजाढ्यः स्वेष्टदः पद्महस्तः ।
सरसिजमधितिष्ठन् श्रीकरोऽक्रूरवर्णः
सकलदुरितमुक्त्यै चिन्तनीयोऽवताल्लः ॥ २८ ॥
दहनपुरगतस्तत्षण्डकं युग्महस्तं
करगतमपि कृष्णैर्वस्त्रगन्धैस्त्रिणेत्रम् ।
त्रिशिखकुलिशहस्तं क्षुद्रविद्वेषदक्षं
दशशतपरिमाणं चिन्तयेच्च स्वरान्त्यम् ॥ २९ ॥

स्वरमूर्त्यधिकारः ।

---

कुलिशमुसलहस्तो भूमिबिम्बेऽजगन्धः[1]
कनकरुगिभसंस्थो ब्रह्मशक्त्याधिदेवः ।
द्विभुजपुरुषवेषो वश्यकृत् कः कपर्दी
दशशतपरिवृत्तः पातु नस्तद्द्विरुच्चः ॥ ३० ॥
शतमखमणिनीलः सर्पयज्ञोपवीतो
धवलवदनरौद्रः पातु वः पिङ्गपादः ।
ज्वलनकमलमेषे पावनः स्तम्भनः खो
दशशतपरिमाणस्तोमरी शक्तिपाणिः ॥ ३१ ॥
फणिनि विकचपद्मे रक्तवर्णे निविष्टः
शतविततिरनुग्रः पुष्टिदस्तावदुच्चः ।

---

१. 'तिविम्बोऽजग' ख. पाठः.

गणपतिधनदेशो हंसवाहः सुगन्धो-
ऽवतु भुजधृतपाशः साङ्कुशो वो गकारः ॥ ३२ ॥

दशशतपरिवृत्तं तद्विमानोच्चषण्डं
कुलिशवरगदाढ्यं ध्येयमुष्ट्राधिरूढम् ।
द्विभुजमसितयाम्यद्वेषणोच्चाटकृत्यैः
स्मरतु च घमुदग्रं यन्मुखोद्खलेस्थम् ॥ ३३ ॥

त्रिशिखमुसलटङ्कैः शक्तिर्दण्डाहिहस्तं
यमपतिमतिकृष्णं षड्भुजं काकवाहम् ।
स्मरतु भुजगरूढं कोटिदीर्घार्धवृत्त
श्वयथुचरणगात्रं द्वेषणेष्वेकरुद्रम् ॥ ३४ ॥

सितरुचिररिशङ्खौ चाम्बुजं मातुलुङ्गं
दधदरुणसुगन्धस्रग्विभूषः कपर्दी ।
जगति निखिलभूत्यै पातु वो गुह्यकेशो
धरणिकमलसंस्थः कोटिमानस्तु कूर्मः ॥ ३५ ॥

मकरकमलरूढः सूर्यकान्तिः स वोऽव्या-
दरिजलजगदाब्जान्यादधद् दिव्यगन्धः ।
धवलवसनगन्धः स्रग्धरः कोटिमानो
विमलमणिविभूषो वश्यदस्त्वेकनेत्रः ॥ ३६ ॥

सितकमलशशाङ्कादुद्गताविन्दुवर्णौ
सफलकुलिशपाशौ सौधकुम्भौ दधानौ ।
दशशतपरिमाणौ वोऽवतां शान्तवर्णौ
पलितमृतिगदघ्नौ क्ष्वेलशान्तिप्रधानौ ॥ ३७ ॥

असितमशुभषण्डं दुर्मतिं काकवाहं
यमपुरुषमनेकैरायसैर्भूषिताङ्गम् ।

१. 'द' ग. पाठः. २. 'मुखम' ख. पाठः. ३. 'संस्थम् ।', ४. 'कैर्दण्डहं', ५. "क्षं पाद्दताबिन्दु' ग. पाठः. ६. 'लाललाशौ' क. पाठः. ७. 'ताच्छान्त', ८. 'मि' ग. पाठः.

त्रिशिखपरशुहस्तं द्वेषकृत्येषु विद्याद्
दशशतपरिमाणं शर्भसंज्ञं तु वर्णम् ॥ ३८ ॥
जलधिसमनिनादः सद्वदो[1] वज्रपाणि-
र्भुजगभुजगनद्धो युग्मबाहुः सुतीव्रः ।
प्रथमरिपुरुजानां ध्वंसनः क्रौञ्चवाहः
कपिलरुचिरुदारो वः स सोमेश्वरोऽव्यात् ॥ ३९ ॥
अमलशशिनिकाशः शङ्खगोक्षीरगौरो
विमलमणिविचित्रैर्भूषितो हारजालैः ।
धरणिपवनपद्मे पद्महस्तो गजोऽव्यात्
सकलविषहरो वो लाङ्गली[2] लक्षमानः ॥ ४० ॥
तुरगकुवलयस्थः पक्वरम्भाद्युतिर्वः
कनकमणिविचित्रस्तुर्यवक्त्रोऽष्टबाहुः ।
दशशतपरिमाणः पद्मपाशाङ्कुशाब्जा-
न्यभयवरदशूलैरादधद् दारुकोऽव्यात् ॥ ४१ ॥
अनलपुरगमेषे वह्निदेवः स वोऽव्यात्
कुलिशवरभुसुण्ठीभिण्डिपालेषुपाशान् ।
परशुमपि रथाङ्गं कार्मुकं चादधानो
दशपरिणतिरुच्चैरर्धनारीश्वरोर्णः[3] ॥ ४२ ॥
त्रिशिखपरशुहस्तं व्याघ्रवाहं सुधूम्रं
त्रिमुखमहितरोगान् ध्वंसयन्तं कुबिम्बे ।
अरिकुलिशभुसुण्ठीपाशदण्डध्वजाढ्यं
स्मरतु दशशतोच्चं चाप्युमाकान्तवर्णम् ॥ ४३ ॥
द्विपवरमधिरूढः शङ्खटङ्काब्जपाशान्
दधदलसमगन्धो वः सहस्रप्रमाणः ।
शतमखवरुणेशो वश्यदो भूषिताङ्गः
कटकमकुटानिष्कैराषढीपाटलोऽव्यात् ॥ ४४ ॥

---

१. 'रो', २. 'पा' ख. पाठः. ३. 'रे' ग. पाठः.

वृषगतशितिवर्णस्तुर्यवक्त्रोऽष्टबाहु-
मेरुदनलपतिर्वः कोटिमानस्त्रिशूली ।
मुसलपरशुशक्तीस्तोमरं भिण्डिपालं
दधदवतु च दण्डं प्रासमप्येष डिण्डी ॥ ४५ ॥

असितमथ यमेशं षड्भुजं वस्त्रिवक्त्रं
भुजगवलयहारं शूलटङ्कासिदण्डान् ।
कुलिशमपि भुसुण्ठिं षण्डमव्याद् दधद् य-
न्महिषगतकरोटौ कोटिमानोऽत्रिसंज्ञम्(?) ॥ ४६ ॥

मृगवरमधिरूढो यः स सर्पोपवीतो
निर्ऋतिपतिरुदग्रः खड्गपाशो भुसुण्ढीम् ।
दधदतिकपिशोऽव्यान्मुद्गरी योऽब्जपीठे
प्रतिभयरिपुभेदी यश्चतुर्लक्षमानः ॥ ४७ ॥

द्विभुजमसितवर्णं व्याघ्रचर्मोत्तरीयं
डमरुकमपि शूलं बिभ्रदारक्तनेत्रम् ।
चिरमवतु पिशङ्गैरम्बराद्यैर्युतं वो
दशशततति नाख्यं काकवाहं च षण्डम् ॥ ४८ ॥

गरुडमधिगतोऽब्जे सर्पयज्ञोपवीती
दशवदनसिताङ्गो विंशतिं यो भुजानाम् ।
दधदपि मणिचित्रः पातु कोटिप्रमाणो
विविधविषहरोऽसौ ब्राह्मणो लोहितार्णः ॥ ४९ ॥

परशुरथपदाढ्यः सिंहपद्माधिरूढः
प्रविततदशकोटिर्युग्मबाहुर्द्विजन्मा ।
हरतु भवदरिष्टं मौक्तिकब्रह्मसूत्र-
स्तडिदनलपिशङ्गो यः शिखी रक्षणेष्टः ॥ ५० ॥

कुवलयविनिविष्टो हंसवाहः षडास्यो
धनपतिपतिरब्जं शङ्खमप्यादधानः ।

धवलवसनगन्धो बन्धुजीवारुणो वः
　प्रविततदशकोटिः श्रीकरोऽव्याद् बकारः ॥ ५१ ॥
त्रिमुखनयनरौद्रं पिङ्गकेशं तरक्षो-
　रुपरि दहनबिम्बे धूम्रवर्णं त्रिहस्तम् ।
रथचरणगदाढ्यं [2]षेण्डकं शूलि वोऽव्यात्
　प्रविततदशलक्षं यद्विरण्डेशसंज्ञम् ॥ ५२ ॥
उदितमिहिरकान्तिः कल्पवह्निप्रकाशो
　जटिलशिरसि चन्द्रं मुण्डमालां च बिभ्रत् ।
त्रिशिखपरशुनागांश्चानलं भूतये वो
　विषमयवपुरब्जे स्यान्महाकालवर्णः ॥ ५३ ॥
मृगगतिरतिधूम्रो वायुबिम्बे स पायाद्
　ध्वजमुसलगदाग्नीनादधद् वायवीयः ।
सकलभुवनमानश्चाटनः क्षुद्रकृत्ये-
　ष्वरुणवसनगन्धैर्भूषितो वो यकारः ॥ ५४ ॥
ज्वलदनलनिकाशो वह्निबिम्बेऽम्बुजस्थः
　सकलभुवनमानो मेषवाहः प्रसन्नः ।
अभयवरदशक्तिस्वस्तिकानादधानः
　सितवसनसुगन्धिः पातु युष्मान् भुजङ्गः ॥ ५५ ॥
कमलगतकरीन्द्रे योषिदापीतवर्णा
　कलमकनकवल्लीवज्रपाशान् दधाना ।
दिशतु धरणिबिम्बे [3]भूषिता सर्वपीता
　धरणिविततिरिष्टं धारिणी स्तम्भिनी वः ॥ ५६ ॥
अ[4]मृतकिरणगौरी नक्रपङ्केरुहो वो
　धवलक[5]मलपाशौ बिभ्रती वारिबिम्बे ।
विविधविषरुजार्तिं ध्वंसयन्ती विभूत्यै
　भुवनविततिरस्तु क्षीरपीयूषमूर्तिः ॥ ५७ ॥

---

१. 'ब्याविकारे' ॥ ग. पाठः. २. 'पञ्चकं', ३. 'मि' ख. पाठः. ४. 'रुणक्षि', ५. 'नकपा' ग. पाठः.

धवलकमलहस्ता पुण्डरीकोपविष्टा
विमलवसनगन्धैर्भूषिता हेमवर्णा ।
दशशतपरिमाणा हारिधम्मिल्लभारा
प्रदिशतु बकवर्णास्याकृतिर्वो विभूतिम् ॥ ५८ ॥
शतमखमणिनीलः कूर्मवाहो द्विबाहुः
कपिशवसनगन्धो वज्रपाशौ च बिभ्रत् ।
दशशतपरिमाणः क्षोभणो वोऽस्तु लक्ष्म्यै
प्रहसितवदनेन्दुः श्वेतसंज्ञः प्रमत्तः ॥ ५९ ॥
शशधररुचिगौरो वज्रपद्माब्जपाशान्
निधिकलशकरण्डे चक्रमप्यादधानः ।
सरसिजगतहंसे भूषितः कोटिमानो
धनदपतिरभीष्टं यो भृगुर्वस्तनोतु ॥ ६० ॥
धवलवसनगन्धस्रग् जटी चन्द्रमौलि-
र्हर इव लकुलीशो भूरिगौरस्त्रिणेत्रः ।
हरिणपरशुशूलैश्चान्वितो विश्वमानः
शिवगिरितनयेन प्राणखात्मावताद्वः ॥ ६१ ॥
सुरपतिभवनाब्जे शङ्खवज्रारिपाशान्
सृणिमुसलभुसुण्ठीखड्गघण्टाकपालम् ।
दधदवतु गजस्थः क्षेत्रपालेन्द्रदेवो
भुवनविततपीतस्त्रीक्षणोऽन्त्यो द्विदंष्ट्रः ॥ ६२ ॥
धवलरुचिरवर्णा ब्राह्मणास्तेऽथ रक्ताः
क्षितिभुज इह पीता ये विशो येऽपि कृष्णाः ।
वृषलकुलसजाता ह्यक्षराश्च स्वलिङ्गैः
पुरुषयुवतिषण्डास्ते प्रतिश्लोकवेद्याः ॥ ६३ ॥

प्रत्यक्षरमूर्त्यधिकारः ।

---

१. 'र्ण' ख. पाठः. २. 'न्धौ' ग. पाठः. ३ 'ति', ४. 'न्त्योऽपि दं' ५. 'हि' ख. पाठः. ६. 'र्त्याद्यधि' ग. पाठः.

गुरव इह हि दीर्घा बिन्दुसर्गाभियुक्ता-
स्तदुपरि विनिविष्टो युक्तवर्णोऽपि यस्य ।
स च गुरुरिति वेद्यः शेषितोऽस्माल्लघुः स्या-
ल्लघुरयुगलमात्रः स्याद् गुरुश्च द्विमात्रः ॥ ६४ ॥
मयरसतजभाख्या नस्तथाष्टौ गणास्ते
पृथगिह खलु हल्भिस्ते त्रिभिः स्युस्त्रिभिश्च ।
सकलगुरुमसंज्ञो यो गणः सोऽवनिः स्यात्
प्रथमलघुयसंज्ञः स्याद् गणस्तोयमूर्तिः ॥ ६५ ॥
रगणमिति लमध्यं वह्निदैवं तु विद्यात्
सगणमपि च वायुं सोऽन्तगुर्वक्षराढ्यः ।
तगणमपि खमाहुस्तस्य चान्ते लघु स्या-
ज्जगणमपि च मध्ये स्याद् गुरुः सूर्यदैवम् ॥ ६६ ॥
प्रथमगुरुभसंज्ञः स्याद् गणः सोमदेवः
सकललघुगणो यौर्नाभिधेयोऽष्टमः स्यात् ।
इति गुरुलघुभिन्नैरष्टभिर्व्याप्तविश्वै-
र्लिपिपरिपठितार्णैः स्याद् गणैः शब्दसूतिः ॥ ६७ ॥
अनलसलिलवर्णा ये गणाः शत्रवस्ते
पवनदहनखार्णा मित्रमन्योन्यमुक्ताः ।
सलिलधरणिसंज्ञास्तेऽपि मित्रं मिथः स्युः
सलिलपवनखाख्या ये गणास्तेऽत्र मध्याः ॥ ६८ ॥
पुरुषयुवतिषण्डाः स्नेहिनः षण्डमध्याः
पुरुषपुरुषयोषिद्योषितोऽन्योन्यदुष्टाः ।
सुहृदि सुहृदमर्णं वा गणं मध्यमं वा
घटयतु स तु मन्त्रो[1] वाचको देवतायाः ॥ ६९ ॥
मनुरपि विधिनैकः साधितो येन देवः
स भवति सगणानां सिद्धिभाक् तन्मनूनाम् ।
किमु बहुविधमन्त्रान् वेत्ति यः साधयेद् वा
स भवति शिवतुल्यस्तत्फलानां निधानम् ॥ ७० ॥

---

1. 'न्त्रो' ग. पाठः.

प्रियफलकटिरम्या श्रीप्रिया[1] रात्रिरन्या
खगकुलकटकश्रीपात्रगर्भार्णसंज्ञौ ।
अभिहितलिपिवर्णानश्विनाद्येषु भेषु
स्वरपरिणतियुग्मं पौष्णभे स्यान्नियोज्यम् ॥ ७१ ॥

ळकारश्च ।

कुरुवृषदधिसंख्याः शोभनास्तारकाः स्यु-
र्भयमृतिगददुःखं गोमिथोऽसंख्यभैः स्यात् ।
कृतमिह खलु यत् स्यान्नाम मातापितृभ्यां
जननभमपि यत्[3] स्यात् तद्द्वयस्यानुकूलम् ॥ ७२ ॥

फलगुरुरुशाणाः शर्मशर्वास्त्वजाद्या
निगदितलिपिवर्णा राशयः शादयः स्युम् ।
जननभनिजनाम्नस्त्वादिवर्णाभियोगा-
दभिमतमनुभेनाप्यादिवर्णेन शोध्यम् ॥ ७३ ॥

शुद्धायामवनौ सगोमयजलैरालिप्य तत्रालिखे-
च्चक्रं षोडशकोष्ठकं तु परितः पङ्क्त्यैकया राशयः ।
विघ्नक्षेत्रपवास्तुवेशविधयः कोष्ठेषु मध्ये स्थितां-
स्तानिष्ट्वा लिपिवर्णराशिघटनां मन्त्रात्मनाम्नोर्नयेत् ॥ ७४ ॥

एको वाप्यथ पञ्चमोऽपि नवमो राशेः स्वकाद् बान्धवो
राशिः स्याद् दशमद्वितीयसहितः षष्ठो भवेत् सेवकः ।
रुद्राग्निस्वरसंख्यया यदि मतस्तन्त्रेष्वयं पोषकः
स्याद् यो द्वादशमोऽष्टमः श्रुतिमितो मन्त्रः स्मृतो घातकः ॥ ७५ ॥

यो बन्धुर्भवति मनुः स रक्षतीमं सर्वार्थानपि वितनोति सेवकाख्यः ।
पुष्टिश्रीविभवयशांसि पोषकात्मा प्राणार्थानपि च निहन्ति घातकाख्यः ॥

---

१. 'श्रीः', २. 'ख्या', ३. 'द', ४. 'सन्ध्यात्' ख. पाठः. ५. 'व', ग. पाठः. ६. 'काः स्युः प्रा' ख. पाठः.

ईशाद्यं तु चतुश्चतुष्पदलिपौ स्वाख्यादिवर्णे पदे
ये सिद्धाः खलु ते द्वितीयपदगाः साध्याः सुसिद्धाः परे ।
वर्णा येऽप्यरयश्चतुर्थपदगास्ते मृत्युदुःखप्रदाः
शिष्टास्ते त्वचिराच्चिराज्जपहुतैः सिध्यन्ति पाठादपि ॥ ७७ ॥

प्राक् साध्याख्यां साधकाख्यां च पश्चाद् धृत्वाष्टाभिस्तत्र शेषाद्दणं स्यात् ।
स्वाख्यावर्णैर्वर्धितैः साध्यवर्णैर्हृत्वाष्टाभिस्तद्विलोमाद्दणं वा ॥ ७८ ॥

साधकाह्वयवर्णानां सह मन्त्राक्षरैस्तु यत् ।
सिद्धाद्यैर्गणनां कृत्वा ज्ञेयो मन्त्रांशकस्त्वयम् ॥ ७९ ॥

पश्चिमात् प्राग्गतं लेख्यं पङ्क्त्योर्दक्षिणवामयोः ।
मन्त्रनाम्नोर्यथा वर्णान् पृथक् तद्व्यञ्जनस्वरैः ॥ ८० ॥

नाम्नोर्मन्त्रस्य वा वर्णा विषमाः स्युर्यदा तदा ।
तत्तदक्षरमालेख्य समं यावत् प्रपूरयेत् ॥ ८१ ॥

ततः सिद्धादिभिर्हृत्वा ज्ञेयं प्राग्वत् फलादिकम् ।
पङ्क्तौ लिखेत् साधकसाध्यनाम्नो वर्णान् स्वरव्यञ्जनभेदभिन्नान् ।
हृत्वा त्रिभिः शात्रवमित्रमध्यान् विद्याच्च शत्रुर्यदि तं प्रजह्यात् ॥ ८२ ॥

संहितोच्चारणात् प्राप्तं शोधनेष्वक्षरं त्यजेत् ॥ ८३ ॥

अधिकं चाप्यनुस्वारं जिह्वामूलं विसर्गकम् ।
त्यक्त्वैवं शोधयेन्मन्त्रान् यथोक्तं तत्त्वसागरे ॥ ८४ ॥

यथैवाद्याक्षरे शुद्धिं तथा सर्वाङ्गशोधनम् ।
कृत्वा कियन्तः सिद्धाद्या मन्त्रेऽस्मिन्निति चाङ्कयेत् ॥ ८५ ॥

सिद्धार्णाश्चतुरो यस्मिन् मन्त्रोऽसौ सिद्धनामभाक् ।
सिद्धहीनस्तु साध्याख्यः सुसिद्धो रिपुवर्जितः ॥ ८६ ॥

सुसिद्धहीनः शत्रुः स्याच्चतुर्धैवं प्रकल्पयेत् ।
सुसिद्धमन्त्रः स्यादन्ते सिद्धये स हि कामधुक् ॥ ८७ ॥

अशत्रुरादिसिद्धो यः सुसिद्धार्णादिको मनुः ।
अरिवर्णविहीनश्च सर्वकामप्रदो ह्यसौ ॥ ८८ ॥

यस्याद्यन्तगतः साध्यः कृच्छ्रसाध्यः स वै मनुः ।
आदावन्तेऽथवाद्यन्ते यस्यारिर्न तमभ्यसेत् ॥ ८९ ॥

स्वभ्यस्तोऽपि हिनस्त्येनं जन्मान्तरशतैरपि ।
सुसिद्धो यस्य चाद्यन्ते सोऽस्य चिन्तामणिर्मनुः ॥ ९० ॥

एवं विशोधयेन्मन्त्रान् यथोक्तं तत्त्वसागरे ॥ ९०½ ॥

प्रत्यक्षरं तु कथितं खलु मातृकायां
रूपादिकं तदभियुक्तजपादिनार्थाः ।
सिध्यन्ति मन्त्रनिकुरुम्बविशिष्टवर्णै-
र्युक्तैस्तु यद् भवति तच्च समस्तमूह्यम् ॥ ९१½ ॥

इत्थं विशोध्य बहुधा प्रथमाक्षरं तन्मन्त्रस्य शिष्टमपि वर्णगणं विचार्य ।
शुद्धाक्षरादिकमनुं [1]तलि[2]नेतराणि दद्याद् गुरुस्तदधिकारिविशेषयुक्त्या ॥ ९२½ ॥

इति [3]श्रीमदीशानगुरुदेवपद्धतौ तन्त्रसारे स्वरोदय-
मातृकाप्रत्यक्षररूपादिकथनं नाम

तृतीयः पटलः ।

---

## अथ चतुर्थः पटलः ।

मन्त्रास्त्रेधा स्त्रीपुमांसश्च षण्डाः स्वाहान्ताः स्युर्योषितो ये नमोन्ताः ।
ते षण्डाख्याः शिष्टमन्त्राः पुमांसः प्रोक्तं मन्त्रव्याप्तौ गौतमेन ॥ १ ॥

पुंभिः कुर्याच्चाटवश्ये विषघ्नं स्त्रीभिर्मोहं चान्त्ययोत्सादनाद्यम् ।
शेषं सर्वं कर्मजातं तु षण्डैर्मन्त्रैः कुर्यादाशु तत्तत्फलाप्त्यै ॥ २ ॥

ताराकाशावन्त्यवाय्वग्निवर्णा ह्याग्नेयाः स्युः सौम्यमन्त्रास्त्वतोऽन्ये ।
आग्नेयोऽपि स्यात् ससौम्यो नमोन्तः सौम्योऽपि स्यादग्निमन्त्रः फडन्तः ॥

---

१. 'न' ख. पाठः. २. 'स्तं', ३. 'श्रीगु', ४. 'त्रृ' ग. पाठः.

स्यादाग्नेयैः क्रूरकार्यप्रसिद्धिः सौम्यैः सौम्यं कर्म कुर्याद् यथावत् ।
सौम्याग्नेयास्तूभयैर्लक्षणैः स्युः कुर्यात् सर्वं कर्म तैः क्रूरसौम्यम् ॥ ४ ॥

स्वापोद्बोधौ तद्वदभ्यासकालं[1] विद्यादेषां त्वासनं चारभेदात् ।
सौम्यानां स्यात् सौम्यतोऽभ्यासकालस्त्वाग्नेयानां सौरतोऽभ्यास उक्तः ॥ ५ ॥

सौम्यैः[2] स्वापः सूर्यचारेऽथ सौम्ये त्वाग्नेयानां स्वाप उक्तोऽथ बोधः ।
द्विष्ठश्चारस्तुल्य एवोभयोः स्यात् सुप्तोऽभ्यासे बुद्धमात्रोऽपि नेष्टः ॥ ६ ॥

जापं कुर्यादुक्तकाले मनूनामुद्बन्धान् वा जप्यहोमक्रियादौ ।
आरभ्यैतान् पूर्वमभ्यासकाले मध्ये स्वापः कर्मणां नैव दुष्येत ॥ ७ ॥

मन्त्रलिङ्गाधिकारः ।

---

षडङ्गो यो मन्त्रः स भवति सनेत्रो ह्यनयनो
मनुः पञ्चाङ्गः स्यात् खलु यदुभयोरङ्गमनवः ।
पृथक् ते स्युर्नो चेत् क्वचिदपि च मूले नवदश-
स्वरैः कुर्याद् दीर्घैरनृणयुगलैरङ्गरचनाम् ॥ ८ ॥

स्वैरर्चिभिर्यद्वदेवाप्रधृष्यः सूर्यो वाग्निस्तेजसाग्र्यः समर्थः ।
तद्वत् साङ्गैर्मन्त्रमूर्तिस्तदात्मा तद्युक्ताङ्गैः स्यात् समर्थोऽप्रधृष्यः ॥ ९ ॥

हृद् बुद्धिगम्यं हृदयस्थ आत्मा स्याच्चेतनावान् हृदयेन मन्त्रः ।
यद् बुद्धिपूर्वं क्रियते नमोऽस्मै मुख्यं हृदङ्गं तत एव वेद्यम् ॥ १० ॥

शिरस्तु मूर्तस्य मनोः प्रधानमङ्गं हि सर्वेशगुणार्थतुङ्गम् ।
स्वतो हि तस्माद् विषयापहारे स्वाहेति युक्तं शिरसोऽङ्गमुक्तम् ॥ ११ ॥

शिखा तु कर्माङ्गतया मनूनां यतो वषड्व्युष्टिकरं तदङ्गम् ।
अधृष्यतेजाः शिखया यदग्निर्वषट्शिखायां विनियुज्यतेऽतः ॥ १२ ॥

कचग्रहार्थग्रहणात् तु [illegible]तोः सङ्गृह्य देहं कवचं मनूनाम् ।
तेजस्तु हुं सर्वमरिष्टजालं निवारयेत् तत्कवचाय युक्तम् ॥ १३ ॥

---

१. 'लः', २. 'म्याः' ग. पाठः. ३. 'त्रै', ४. 'ति' ख. पाठः.

नेत्रेण सर्वं परिपश्यतीह मन्त्रः स्फुटं यं दृशि दर्शनाय ।
वौषड् भवेदङ्गमतस्तु नेत्रं[1] नेत्रे तु सिद्ध्यै दृशि वौषडुक्तम् ॥ १४ ॥

असूनदः पालयतीत्यतोऽस्त्रं धातोरसुक्षेपणवाचकार्थात् ।
अनिष्टमाक्षिप्य तु पाति मन्त्रं[3] त्रैङ्पालनेऽस्त्रायफडित्यतोऽस्त्रम् ॥ १५ ॥

पूर्वं गुरुर्योऽस्य मनोर्विधानं विज्ञाय संसाधितवानृषिः स्यात् ।
इच्छाप्रधानार्थकथां तु योगाच्छन्दो भवेद् वर्णगतं यथावत् ॥ १६ ॥

ददात्यभीष्टानवतीह दुःखाद् या देवता दैवतभावदानात् ।
सा देवताख्या मनुवाच्यवस्तुस्वरूपिणी यत् कथितं प्रपञ्चे ॥ १७ ॥

मन्त्रात्मिकायास्त्वथ देवताया मूर्तिर्हि सर्वो मनुवर्णपूगः ।
शक्तिस्तु तत्पूर्तिकरी चितिः स्याद् बीजाह्वयमस्यैव तु जीवभूतम् ॥ १८ ॥

तच्छन्दो मुनिरहितं जपेद् यदासौ तुच्छं वै दिशति फलं तु बीजशक्त्योः ।
अज्ञानाद् व्रजति मनुर्जडत्वमङ्गैरन्यस्तैरसुरगणा हरन्ति जप्यम् ॥ १९ ॥

शुद्धो विष्णुर्येन केन स्वरेण स्पृष्टो वह्निर्होमसंवर्तको वा ।
ठोपोवोमा[4](?) सोऽपि वामाक्षयुक्तो बीजं खड्गी सामरेशोऽपि मन्त्रे ॥ २० ॥

सानन्तो वा वामपार्श्वे भुजादिर्वामाक्षाढ्यौ[5] वाथ मेषोधिसूक्ष्मौ ।
सामान्याः स्युः सर्वमन्त्रेषु बीजान्येतान्येवं यत्र नोक्तं तु बीजम् ॥ २१ ॥

एकाक्षरस्य तु मनोर्न परं तु देवबीजं वदन्ति यदतः परतः पुरोक्तम् ।
शक्तिश्च नादसमबिन्दुरनिश्चिता चेद् बीजादजः परतरः खलु शक्तिरुक्ता ॥

राशेस्तथा साधकसाध्यनाम्नोर्नक्षत्रयोः सर्वमिहानुकूलम्[6] ।
यो मन्त्र उक्तेन जपेन सिध्येत् सिध्येन्न मन्त्रोऽपि चिरेण वान्यः ॥ २३ ॥

नामक्षराश्यादिकमानुकूल्यं मन्त्रेषु सप्तस्वनपेक्ष्यमेषु ।
हंसाष्टपञ्चाक्षरवह्नितारैः सावित्रिसञ्जीवनगोपकेषु ॥ २४ ॥

---

१. 'त्र', २. 'ति', ३. 'न्त्रत्रैपा' ख. पाठः. ४. 'कोपो मोवो सो', ५. 'ढ्यौ' ग. पाठः. ६. 'विधानु' ख. पाठः.

लिप्यर्णानां संविभागेन योक्ता नक्षत्राणां विंशतिः सप्तयुक्ता ।
तत्संख्याः स्युर्देवताश्चापि वृक्षास्तान् न छिन्द्याद् यत् स्वमन्त्रर्क्षवृक्षम् ॥

स्वायुर्वृद्ध्यै वर्धयेत् तं तु रक्षेद् वन्देदेनं सिद्धये मन्त्रवृक्षम् ।
मन्त्रर्क्षेशां देवतां चार्चयेत् तां ये वर्गोत्थास्तान् ग्रहांश्च स्ववारे ॥ २६ ॥

दस्रो यमोऽथ दहनः कथितः प्रजेशः सोमः शिवादितिसुरेड्यभुजङ्गमाश्च ।
पित्रर्यमाख्यभगभास्करविश्वकर्मप्राणा महेन्द्रदहनावथ मित्रसंज्ञाः ॥ २७ ॥

इन्द्रस्तथापि निर्ऋतिः सलिलं च विश्वे चक्रायुधोऽथ वसवो वरुणोऽप्यजाङ्घ्रिः ।
ख्यातोऽहिपूर्वपदबुध्निरथोऽत्र पूषा ख्याता क्रमेण भगणस्य तु देवतामी(?) ॥

कारस्करामलकपूर्वमुदुम्बराख्या जम्बूस्तथैव खदिराप्यथ कृष्णवंशौ ।
साश्वत्थनागतरुरोहिणकाः पलाशाः प्लक्षस्ततस्त्वमितिपूर्वकबष्ठसंज्ञः ॥ २९ ॥

बिल्वार्जुनावपि विकङ्कतकेसराख्या वृक्षास्तथा शबरसर्जकवञ्जुलाह्वाः ।
उक्ताः क्रमेण पनसार्कशमीकदम्बा भानां तु चूततरुनिम्बमधूकसंज्ञाः ॥ ३० ॥

एभ्यः सदेवताभ्यस्तु नक्षत्रेभ्यः समुद्गताः ।
तिथयः प्रतिपत्पूर्वाः पक्षयोः शुक्लकृष्णयोः ॥ ३१ ॥

सोमवृद्धिक्षयवशाद् द्विधा स्युस्तिथयस्तु ताः ।
तिथीनां क्रमशस्त्वासां देवताः प्रभवन्ति याः ॥ ३२ ॥

अग्निर्दस्रावम्बिकाविघ्ननागाः स्कन्दः सूर्यो मातरश्चापि दुर्गा ।
आशा श्रीदश्चाथ वैकुण्ठधर्मौ रुद्रश्चन्द्रश्चाथ पित्र्या कुहूः स्यात् ॥ ३३ ॥

सराशितारालिप्यर्णतिथिभ्यः शक्तिजृम्भितात् ।
करणान्यभवन् सप्त बवादीनि तु पक्षयोः ॥ ३४ ॥

बवं च बालवं चैव कौलवं तैतिलं तथा ।
गरजं वणिजाख्यं च विष्टिश्चैव तु सप्तमी ॥ ३५ ॥

पशवः सप्त सिंहाद्या बवादीनां तु योनयः ।
सिंहव्याघ्रवराहाश्च खरेभच्छागकुक्कुराः ॥ ३६ ॥

देवताः सप्त शक्राजमित्रार्यमधराश्रियः ।
यमश्च करणानां स्युः पूज्यास्तत्करणेषु ते ॥ ३७ ॥

एवं हि मातृकावर्णविवृतिः संप्रकीर्तिता ।
गौतमीये यथा प्रोक्तं मन्त्रव्याकरणेषु च ॥ ३८ ॥

प्रपञ्चसारे च यथा यथोद्गार्ग्यभाषितम् ।
मातृकावर्णवितातिर्विश्वमेतदिति स्फुटम् ॥ ३९ ॥

विन्दोरग्रे रवोऽभूदथ रवजनिताः षोडशादौ स्वराः स्युः
काद्यर्णाः पञ्च वर्गास्त्वथ खलु यमुखा धातुभिः पञ्चभूतैः ।
सन्मात्राभिस्तथाक्षैः प्रकृतिरथ गुणैर्विश्वरूपा नसंज्ञा
शक्तिर्वागीश्वरीयं ननु जगदखिलं यत् प्रपञ्चाभिधेयम् ॥ ४० ॥

इति श्रीमदीशानगुरुदेवपद्धतौ तन्त्रसारे
मन्त्रलिङ्गादिकं नाम
चतुर्थः पटलः ।

---

अथ पञ्चमः पटलः ।

अथ मन्त्रजपार्चनाहुताद्यैर्विविधानामपि कर्मणां तु युक्त्या ।
पृथगत्र हिताय साधकानां कथयिष्ये निखिलेन साधनाद्यम् ॥ १ ॥

कथिताः खलु तत्त्वसागरादौ विधयः पल्लवयोगरोधनाद्याः ।
हरितश्च सदेशकालयुक्त्या विविधद्रव्यदिनासनादिकुण्डैः ॥ २ ॥

अपि पल्लवयोगरोधनानि ग्रथनं संपुटकं विदर्भणं च ।
इति कर्मसु योजनं हि षोढा मनुवर्णैः सह साधकार्णयुक्त्या ॥ ३ ॥

मनुरन्तनिविष्टसाधकाख्यः कथितः पल्लवमादितस्तु योगः ।
उभयत्र मनोस्तु नामरोधौ ग्रथनेऽर्णान्तरितं द्वयोः क्रमेण ॥ ४ ॥

उभयत्र तु साधकस्य मन्त्रो विनिविष्टो यदि संपुटं तदाहुः ।
मनुवर्णयुगेन साधकार्णं यदि चैकं क्रमशो विदर्भणं स्यात् ॥ ५ ॥

---

१. 'प्र', २. 'च' ग. पाठः.

ग्रहभूतपिशाचनिग्रहादौ विषसंहारविनाशमारणेषु ।
अरिचाटनसादनेषु तेषामपि विद्वेषविधौ च पल्लवं स्यात् ॥ ६ ॥
परमोहनकर्मणां तु रोधः परसंस्तम्भनकेषु योगमाहुः ।
जनशीलनकेषु संपुटं स्याद् वशकृच्छान्तिकपुष्टिदो विदर्भः ॥ ७ ॥

### पल्लवाद्यधिकारः

---

वृषशान्तिकपौष्टिकेषु पूर्वा त्वनलाशा खलु चाटने ज्वरे च ।
ननु मारणमोहयोर्यमाशा कथिता द्वेषणकेषु राक्षसाशा ॥ ८ ॥
जलदिग् जलवृष्टिदाहशान्त्यां भ्रमणस्तम्भनयोश्च मारुताशा ।
शिववाग्यजनेषु वश्यकृत्ये धनदाशा कथितेशादिग् विमुक्त्यै ॥ ९ ॥
शिवदक्षिणमूर्तिपश्चिमाशा मुखशर्वालयगोष्ठपुण्यनद्यः ।
परदेवहुताशविप्रगेहैर्वनशैलाः खलु शान्तिकेषु देशाः ॥ १० ॥
वटपिप्पलबिल्वमूलदेशाः प्रथमोक्ताः शुभपौष्टिकेषु शस्ताः ।
अपि[1] कर्षणवश्यकर्मणोस्ते खलु शस्ताः स्वगृहादिकं च रम्यम् ॥ ११ ॥
परिशोध्य भुवं तु शल्यहीनां गतलोष्टात्ममषीतुषादिदोषाम् ।
सिकतासममृत्स्नयाभिपूर्णां मुकुराभासुदगिन्द्रदिक्प्लवान्ताम् ॥ १२ ॥
अभिपूजितवास्तुपाधिदैवां सुरभेः सूतकरोगवर्जितायाः ।
गगनात्तनवेन गोमयेनाप्युपलिप्याम्बरगालितैश्च तोयैः ॥ १३ ॥
प्रकृतानुगुणं तु तत्र कुर्यात् परिशुद्धेष्टकदारुबल्बजाद्यैः ।
अपि यज्ञियसाधनैर्यथेष्टं मठशालादिकमिष्टदण्डमानम् ॥ १४ ॥
परमाणुरजः कचश्च लिक्षाः सहयूकाश्च यवाः क्रमाष्टसंख्याः ।
यवकोटरकोष्ठकं तु तिर्यक् खलु मानाङ्गुलमिष्यते स्म तन्त्रे ॥ १५ ॥
प्रवदन्ति वितस्तिका द्विषट्कैरिति मानाङ्गुलकैर्वितस्तियुग्मम् ।
कथयन्ति हि किष्कुसंज्ञहस्तं निपुणा हस्तचतुष्टयं च दण्डम् ॥ १६ ॥

---

१ 'करणेषु' ग. पाठः. २. 'हि', ३. 'वा:' ख. पाठः.

धनुरित्यपि दण्ड एव तेषां धनुषामष्टकमुच्यते हि रज्जुः ।
सुरतारसुराङ्गुलैः प्रजेशं सधनुर्मुष्टि धनुर्गृहे च विद्यात् ॥ १७ ॥

ऋजुमध्यमपर्वमध्यमायास्त्विह मात्राङ्गुलमिष्यते तदान्यत् ।
भवनादिषु पूर्वमङ्गुलं स्यात् खलु मात्राङ्गुलमेव साधनेषु ॥ १८ ॥

गृहविस्तृतिदैर्घ्यदण्डपूगं त्रिगुणं तद्वसुभक्तशिष्टदण्डाः ।
क्रमशो ध्वजधूमकेसरिश्ववृषभाः स्युः खरहस्तिवायसाख्याः ॥ १९ ॥

ध्वजसिंहवृषेभलक्षणाः प्राग्यमनीरेशधनेशदिक्षु शालाः ।
अपि मध्यगृहे समे च वृत्ते सममेतच्छुभदण्डमेव कुर्यात् ॥ २० ॥

अपि चाटनमारणादिकानामशुभानामिह कर्मणां प्रयोगे ।
ननु वायसगर्दभश्वधूमैरधिदण्डं भवनादिकं विधेयम् ॥ २१ ॥

विषवृक्षपरेतभूमिकाष्ठैरशुभैः कण्टकिभिश्च तत्र शालाः ।
यमवह्निनिशाटदिक्प्लवा भूर्निखिलक्षुद्रविधौ विशेषरौद्राः ॥ २२ ॥

विपिनानि चिता स्वयंभुवैकं शिवलिङ्गं भवनं करालिकायाः ।
महिषासुरमर्दिनीनिवासोऽप्यभिचारेषु निरालयाश्च शस्ताः ॥ २३ ॥

अचलाश्च विविक्तनिर्जला ये मुसलस्त्रीशिशुशब्दवर्जिताः स्युः ।
अशुभेषु शुभेषु चापि देशाः परिहीणान्त्यजरासभाश्वशूर्पाः ॥ २४ ॥

कृकवाकुविलालजुष्टदेशे जपहोमादि कृतं फलाय न स्यात् ।
विधवा विकलाश्च पापिनो वाप्यृतुमत्यश्च निहन्ति कर्म सर्वम् ॥

शुभकर्मसु कन्यकाश्च सत्यः शुभलक्ष्मप्रवराङ्गनाश्च विप्राः ।
ध्वनयोऽपि गवाश्वकुञ्जराणां फलदाः स्युः सह शङ्खवाद्यगीतैः ॥

अभिचारविधौ तु कन्यकाद्या विधवाद्याश्च गवाश्ववेदघोषाः ।
अपहन्युरिमे प्रयोगशक्तिं सुतरां माङ्गलिकानि तत्प्रदेशे ॥ २७ ॥

विजनेषु विशेषतोऽभिगुप्तेऽनतिदूराद् विविधाप्तरक्षिवर्गैः ।
विपिनादिपुरोक्तलक्षणेऽन्यैर्यददृष्टे विदधातु मारणाद्यम् ॥ २८ ॥

ह्रादिनीनदसह्यविन्ध्यशैलास्त्वपि रत्नाकरगा विशिष्टनद्यः ।
उदधेः सलिलं च हन्युरेते यदि मध्ये स्युरलं प्रयोगशक्तिम् ॥ २९ ॥

---

१. 'क्ति' क. पाठः.

प्रकृतार्थविशेषकर्मणामप्यभिरूपे सुविचारितप्रदेशे ।
यदसौ विदधाति बीजमुप्तं ननु देशानुगुणं फलाय रोहेत् ॥ ३० ॥

देशाधिकारः।

---

विदधीत वशीकरं वसन्त परविद्वेषणकं निदाघकाले ।
वर्षास्वरिचाटनप्रयोगं शिशिरे मारणकर्म चेत् करोतु ॥ ३१ ॥
शरदेव हि शान्तिके प्रशस्ता खलु हेमन्तकृतानि पौष्टिकानि ।
ननु शान्तिकपौष्टिके हिमे वा मधुमासेऽपि तथा परे वदन्ति ॥ ३२ ॥
उदयात् परतो रवेस्तु यामाविह हेमन्तवसन्तकौ क्रमोक्तौ ।
प्रहरावधि पश्चिमौ निदाघाह्वयमासावुदितौ दिनावसानात् ॥ ३३ ॥
मिहिरास्तमयात् तु विंशतिः स्याद् घटिकाः शारदकालसंज्ञितोऽसौ ।
परतो घटिकास्तु शैशिरः स्यादुदयात् प्रागिति तत्त्वसागरोक्तम् ॥ ३४ ॥

कालाधिकारः।

---

सिततण्डुलभक्तपञ्चगव्यैस्तिलपुष्पाक्षतशुक्लगन्धयोगैः ।
ननु नित्यविधौ पलाशदूर्वायवशालिप्रमुखाश्च धान्यवर्गाः ॥ ३५ ॥
अथ शान्तिककर्मणां विशिष्टे हवनादौ च यथोदितं समिद्भिः ।
विदधीत शमीवटाम्रनित्याखदिरोदुम्बरमार्गबोधिबिल्वैः ॥ ३६ ॥
दधिमाक्षिकदुग्धपायसाज्यैश्चरवो बिल्वतिलाश्च[1] शालिभेदाः ।
फलमोदकशर्करोक्तपुष्पैः समिधः स्युर्विविधाश्च पौष्टिकेष्टाः ॥ ३७ ॥
लवणास्तिलसर्षपौ यथोक्ताः समिधः पुष्पफलानि पुत्तलीकाः ।
मधुराणि सजन्मवृक्षहेमैः स्युरमी चन्दनरोचने च वश्ये ॥ ३८ ॥
मधुपेन्द्रलते सहा च भीता हरिपत्नीहरिलङ्घितासुभद्राः ।
मुसली गिरिकर्णिमोहनीकाः[2] सुरताल्युत्पलमार्दलाब्जदूर्वाः[3] ॥ ३९ ॥
गजदानशिले सितार्कमूलं कनकं क्षीरनगाः स्वदेहजानि ।
उदितानि हि वश्यकर्षणार्थं जतुभूर्जादि च तत्र तन्त्रगीतम् ॥ ४० ॥
तुषसर्षपकाककाकवैरिच्छददण्डीविषनिम्बमातुलुङ्गैः ।
महिषाश्च जलेऽप्यलक्तसारं ननु विद्वेषणकर्मवस्तु गीतम् ॥ ४१ ॥

---

१ 'ज' ख. पाठः. २. 'हि' ग. पाठः. ३. 'लदाब्ज' ख. पाठः.

फणिसूरणचित्रलोणपिण्डैः कनकाम्भोगृहधूम्रकोषणैर्यत् ।
परिपिष्टमिदं विषं वदन्ति द्विषतां द्वेषणमारणक्रियेष्टम् ॥ ४२ ॥

पिचुमन्दतरुस्थकाकनीडं वसनाङ्गारमृदः श्मशानलब्धाः ।
नगदारुकमर्कटीकैदण्डीनृकचास्थ्यादि च वस्तु चाटने स्यात् ॥ ४३ ॥

भ्रमणे च पिशाचवृक्षनिम्बावासितोन्मत्तकलाङ्गलीशैणैश्च ।
रुजिचित्रकदण्डिशाल्मलाद्यैर्विषभल्लातविभीतकैश्च कुर्यात् ॥ ४४ ॥

विषवृक्षविषाजसर्पिषोऽहीन् नृकपालास्थि फलानि चैत्यकाष्ठैः ।
वसनान्यसितानि सर्षपाद्यं नखकेशाङ्घ्रिरजांसि साध्यजानि ॥ ४५ ॥

द्विकशालवकाकरक्तपीतैः कुसुमैर्लोहितपुष्परक्तगन्धैः ।
अपि जन्मनगादिपुत्तलीभिः कटुकोष्णैरपि मारणं विधेयम् ॥ ४६ ॥

बुससर्षपपीतगन्धपुष्पैः कटुकोष्णाम्बुनिशाजमाहिषाणि ।
कुपटच्चरकोकिलाक्षचक्रीमृदिति स्तम्भनकृत्यसाधनानि ॥ ४७ ॥

द्रव्याधिकारः ।

---

तपनाहिनगात्मभाश्विनीनां तिथयोंऽशा दिवसाः शुभग्रहाणाम् ।
हरदस्रहरीन्द्रसूर्यपूषादितिदैवानि च भानि शान्तिके स्युः ॥ ४८ ॥

तिथयो महिषारिविघ्नयाम्याः शशिजीवांशदिनोदयादिकं च ।
गुरुविष्णुशशाङ्कभैर्भगर्क्षे कथितं पौष्टिकसिद्धिदं यथावत् ॥ ४९ ॥

नवमी हरिमातृदिग्गुहानां तिथयः शुक्रकुजार्कवासरांश्च ।
रवितिष्ययुताश्च सिद्धयोगाः कथिताः संवननेषु कर्षणे च ॥ ५० ॥

नवमी शशिमातृवह्निदैवास्तिथयः शुक्रकुजार्कवासराद्यम् ।
यमवह्निहराहिदैवपूर्वाः खलु विद्वेषणकर्मसिद्धिदाः स्युः ॥ ५१ ॥

असिताहनि चासितप्रदोषोऽप्यसिताष्टम्यथ तच्चतुर्दशी च ।
हरवह्नियमाहिवायुतारास्त्वखिलोच्चाटनकर्मसिद्धिदाः स्युः ॥ ५२ ॥

असिताथ चतुर्दशी कुहूरप्यसिताष्टम्यसितार्कभौमवारैः ।
कुलिकस्थविरे यमाम्बुभे वा कुजमन्दाभ्युदयाश्च मारणे स्युः ॥ ५३ ॥

---

१. 'धू' ख. पाठः. २. 'म', ३. 'कु' ग. पाठः. ४. 'ग' ख. पाठः. ५. 'निः', ६. 'का' ग. पाठः. ७. 'जा', ८. 'राद्यम् ॥ यम', ९. 'धिकाष्ट' ख. पाठः, १०. 'र' ग. पाठः.

द्विषतोऽष्टमराशिनैधनर्क्षेष्वथ वैनाशिकमार्गसंख्यमानि ।
कुजमन्ददिनोदयादियोगैरभिचर्यासु भवन्ति सिद्धिदानि ॥ ५४ ॥
कुजशुक्रबुधेन्दुसूर्यसौम्या भृगुजारौ गुरुमन्दसौरिजीवाः ।
क्रमशोऽश्वयुजादिभाङ्घ्रिपास्ते खलु मेषादिकराशिपाश्च ते स्युः ॥ ५५ ॥
कुजभास्करजीवमन्दशुक्रा बुधशुक्रार्कजसौम्यचन्द्रभौमाः ।
धिषणोऽप्यधिपास्त्वजादि सिंहाद्यपि चापादिषु राशिषु त्रिधैवम् ॥ ५६ ॥
गुरुमन्ददिनेऽथ जीवमन्दांशकनक्षत्रतदंशके सरिक्ते ।
स्थविराख्यमुदाहरन्ति शस्तं रिपुरोगार्णविनाशनप्रयोगे ॥ ५७ ॥
दिवसं प्रविभज्य चाष्टधान्त्यप्रथमौ मोक्ष्यति तद्दिनग्रहांशौ ।
प्रहरार्धभुजौ ग्रहाः षडन्ये क्रमशोंऽशो गुलिकोऽत्र यः शनेः स्यात् ॥ ५८ ॥
जननर्क्षकतोंऽशकादशीतेरधिको यस्य तु योऽष्टमोंऽश उक्तः ।
स विनाशकसंज्ञको विनाशी निजभात् सप्तमभं तु नैधनाख्यम् ॥ ५९ ॥
निजभाद्द्वितोदधिग्रसंख्याः शुभताराः शुभकर्मणां प्रशस्ताः ।
शुभकर्म करोतु रागधामा सधनैकादशसंख्यया स्वराशेः ॥ ६० ॥

## दिनाधिकारः ।

न च यानगतो न वाहनस्थो न च यन्त्रस्थलगो न वाशुचिः सन् ।
विषयेष्वभिषक्तमानसो वा जपहोमादिकृतं फलं लभेत ॥ ६१ ॥
अतिनीचमपीह नोच्छ्रितं वा न च शुद्धेतरचर्मकम्बलाढ्यम् ।
अशुभाङ्घ्रिपजं च भिन्नदग्धं नृजलोच्छिष्टमलाक्तमासनं स्यात् ॥ ६२ ॥
कुशदर्भकृताः शुभाश्च बृस्यः फलकाः पुण्यतरूद्भवा विशालाः ।
सकषायतरक्षुचर्म चैणं त्वपि शस्तानि सुलोहदन्तजानि ॥ ६३ ॥
सितशुद्धविधौतवाससा + समवास्तीर्णविशङ्कटासनानि ।
प्रभवन्ति हि सौम्यकर्मसिद्ध्यै विषवृक्षादिकृतान्यसौम्यकृत्ये ॥ ६४ ॥
उपविश्य तु विष्टरेऽथ जान्वोर्विवरेऽङ्गुष्ठनिपीडनं विधाय ।
ऋजुमध्यगलेक्षणाग्रकायो भवति स्वस्तिकमासनं निविष्टम् ॥ ६५ ॥

१. 'वा' ग. पाठः.

चरणाग्रयुगं त्वथोपरिष्टादधिरोप्योरुयुगस्य मूलदेशे ।
उपविश्य पुरेव पद्मसंज्ञं कथितं तद्विपरीततस्तु भद्रम् ॥ ६६ ॥
अधिरोप्य तु दक्षिणाङ्घ्रिमूरावथ सव्ये चरणे तु दक्षिणोरुम् ।
अधिरोप्य पुरेव सूपविष्टो यदि योगासनमिष्टदं तदाहुः ॥ ६७ ॥
वृषणे तु निगृह्य वामजङ्घापदगुल्फे त्वधिरूढसस्फिगूरुः ।
उपरिस्थितदक्षिणोरुजानुः खलु योगी स तु गोमुखासनस्थः ॥ ६८ ॥
विनिवेशितजिह्मदक्षिणाङ्घ्रिः फलकादावुपविश्य वामपादम् ।
अवनौ विनिधाय चोर्ध्वजङ्घं ननु तत् स्वस्तिकमर्धपूर्वमाहुः ॥ ६९ ॥
उपविश्य तथासने तु पादौ भुवि संस्थाप्य मिथो निबद्धजङ्घौ ।
समतोरणजानुरूढहस्तो यदि वीरासनयोगपट्टनद्धः ॥ ७० ॥
स्थित एव पदद्वयेन भूमौ फलकाद्यं च विना स चेन्निविष्टः ।
समतोरणवत् स्थितोरुजङ्घो भवतीहोत्पु[1]टिकं च कुक्कुटं तत् ॥ ७१ ॥
[2]मरुतां विजये तथेन्द्रियाणां भवमुक्तौ च [3]सुधारणे समाधौ ।
कमलासनमिष्टमत्र भद्रं हितमुक्तं खलु नित्यपौष्टिकादौ ॥ ७२ ॥
कथितं खलु शान्तिकेषु कर्मस्वखिलं स्वस्तिकमेव चाभिषेके ।
अपि शान्तिकजप्यहोमपूजास्वथवा स्वस्तिकमर्धपूर्वमिष्टम् ॥ ७३ ॥
सकलीकरणे निजैक्यदेवेष्वभिजप्येषु समाधिहंसयोगे ।
परमार्थनिरूपणेषु चेष्टं खलु योगासनमग्रतो गुरुश्चेत् ॥ ७४ ॥
पूतनाविजये च तन्निरोधेष्वपि संस्तम्भनभूतनिग्रहादौ ।
अपि संवननेषु कर्षणे वा ननु वीरासनमुक्तमाशुसिद्ध्यै ॥ ७५ ॥
कथितं खलु कुक्कुटं रिपूणां [4]रुचिविद्वेषणचाटनक्रमेषु ।
अथ मारणकेषु पार्ष्णिसंज्ञं [5]विदितं चासनमर्धकुक्कुटं तत् ॥ ७६ ॥
विजये मरुतां स्वदोषशान्त्यै पूतनास्तम्भविधौ च गोमुखं वा ।
प्रमदार्जनकर्षणेषु चाब्जं विजितं यद् विदितं गुरूपदिष्टम् ॥ ७७ ॥

---

१. 'त्कु' ग. पाठः. २. 'अरुणां वि' ख. पाठः. ३. 'स' ग. पाठः. ४. 'रजिवि' ख. पाठः. ५. 'य' ग. पाठः. ६. 'नरक' ख. पाठः.

विजयेन यथैवमासनानां फलमेकाग्रतया मनःप्रसादः ।
मन एव हि सर्वकारणं तत् स्ववशं चेद् विजितं हि किं न सर्वम् ॥७८॥

आप्यं मण्डलमुच्यतेऽत्र पुरतो यत् तत्र शान्त्यादिकं
भौमं वाखिलनित्यपौष्टिकविधौ शस्तं त्वथो मारुतम् ।
द्वेषोच्चाटनकेषु संवननकेऽप्याग्नेयमाकर्षणे
संस्तम्भे खलु भौममैन्द्रमथवा स्याच्छान्तिके पौष्टिके ॥ ७९ ॥

मारणं तु विदधीत वायुना वेष्टितानि कुलिशाङ्कमण्डले ।
वह्निसंपुटषडश्रकेऽथवा शान्तिकान्यपि वशीकराण्यपि ॥ ८० ॥

आसनाद्यधिकारः ।

---

विज्ञायैतदशेषमेव विधिना विद्याविशिष्टाद् गुरो-
स्तत्तत् कर्म समादधीत नियतं संसिद्धमन्त्रात्मवान् ।
यद् यत् स्वार्थपरार्थकारणतया कृत्यं भवेत् साधकः
कृत्वा तत् फलमश्नुते स भुवने संजाततत्प्रत्ययः ॥ ८१ ॥

इति श्रीमदीशानशिवगुरुदेवपद्धतौ तन्त्रसारे
साधनपटलः पञ्चमः ।

---

## अथ षष्ठः पटलः ।

अत्राग्निकुण्डानि च मण्डलानि प्रत्येकशस्तान्यथ तेषु तेषु ।
तन्त्रेषु यानि प्रथितानि सम्यक् संक्षिप्य वक्ष्यामि यथाप्रधानम् ॥ १ ॥

वेदाश्रकं शान्तिकपौष्टिकादौ वृत्तं च योनिप्रतिमं हि वश्ये[1] ।
आकृष्टयेऽश्वत्थदलं तु कुण्डं स्तम्भेऽष्टकोणं भ्रमणे षडश्रम् ॥ २ ॥

वज्राङ्ककोणत्रिषडश्रकुण्डे स्यातां द्विषन्मारणचाटनादौ ।
सर्वाणि कुण्डानि हरित्सु कुर्याल्लिङ्गप्रतिष्ठासु च देवतानाम् ॥ ३ ॥

प्रासादे मण्डपे वापि गृहे वा यत्र कर्म तत् ।
क्रियते तत्र संशुद्धे स्थले गव्योपलेपिते ॥ ४ ॥

---

१. 'क्ष्ये' ख. पाठः.

मध्येऽत्र सूत्रं वरुणेन्द्रदीर्घं निवेश्य चास्फाल्य तु तस्य मध्ये ।
बिन्दुं विधायापरपूर्वयोस्तदथाङ्कयेत् सूत्रवशात् समानम् ॥ ५ ॥

पुनस्ते सूत्रखण्डे तु समं भित्त्वाङ्कयेदपि ।

बिन्दोस्तु पूर्वापरमध्यमाङ्कैर्मितेन सूत्रेण तदाहितेन ।
बिन्दोः सयाम्योत्तरदिक्समाङ्कभ्रमैः समालिख्य तु मत्स्ययुग्मम् ॥ ६ ॥

तयोर्निधाय सूत्रं स्याद् दाक्षिणेनोदगायतम् ॥ ७ ॥
इत्थं ब्रह्माह्वयं सूत्रमुदक्सूत्रं च साधयेत् ।

क्षेत्रार्धमानेन तु बिन्दुसंस्थश्चतुर्दिशं सूत्रवशाद् यथेष्टम् ।
अङ्कान् विधायाथ तदङ्कयुग्मात् सूत्रद्वयात् स्युः खलु कोणमत्स्याः ॥ ८ ॥

तेषु मत्स्येषु परितो दिक्षु सूत्रैर्निपातितैः ॥ ९ ॥
चतुरश्रं भवेत् क्षेत्रं चतुष्कोष्ठं समं शुभम् ।
सर्वमण्डलकुण्डादेः सामान्योत्पत्तिकारणम् ॥ १० ॥

## चतुरश्रसाधनम् ।

कुण्डं प्रशस्तं चतुरश्रमादावश्वत्थपत्रं च तथार्धचन्द्रम् ।
तद्वत् त्रिकोणं त्वपि वर्तुलं स्यात् षट्कोणकं पद्ममथाष्टकोणम् ॥ ११ ॥

रत्निमात्रं शतार्धे स्याच्छतहोमे त्वरत्निकम् ।
सहस्रे हस्तमानं स्यादयुते च द्विहस्तकम् ॥ १२ ॥
लक्षे चतुष्करं कुण्डं दशलक्षे तु षट्करम् ।
कोटिहोमेऽष्टहस्तं स्याद् यथा भोजेन्द्रपद्धतौ ॥ १३ ॥

सर्वाणि कुण्डानि यथोक्तमानादायामविस्तारसमानि तानि ।
खातं तु विस्तारसमं विधेयं तिस्रः क्रमाच्चोपरि मेखलाः स्युः ॥ १४ ॥

समं स्यात् सर्वतः खातं खातोपरि चतुर्दिशम् ।
एकाङ्गुलं परित्यज्य कुर्यात् तिस्रोऽथ मेखलाः ॥ १५ ॥

रत्निप्रमाणे खलु मेखला स्यादाद्याङ्गुलाभ्यामपराङ्गुलेन ।
अर्धाङ्गुलाद्या त्वथवा त्वरत्नौ त्रिद्व्येकमात्राङ्गुलकैर्विधेया ॥ १६ ॥

---

१. 'ह्माद्विधा' ग. पाठः. २. 'चतुष्करम्', ३, ४ 'ह्या' ख. पाठः.

अत्र भोजराजः —

"कुण्डहस्तप्रमाणस्याद्या व्यङ्गुला द्वितीयाङ्गुलेनार्धाङ्गुलेन च तृतीया अरत्निप्रमाणस्य त्र्यङ्गुलद्व्यङ्गुलाङ्गुलमाना[1]" इति।

हस्तकुण्डे मेखलाः स्युश्चतुस्त्रिद्व्यङ्गुलाः क्रमात्।
षट्चतुस्त्र्यङ्गुलैः कुर्याद् द्विहस्तेऽपि यथाक्रमम्॥ १७॥

चतुष्करे त्वष्टकषट्चतुष्कैः षड्ढस्तके चापि दशाष्टषड्भिः।
स्युरङ्गुलैरष्टकरेऽपि कुण्डे ताः षोडशद्वादशकाष्टसंख्यैः॥ १८॥

सर्वाः सर्वेषु कुण्डेषु विस्तारोच्छ्र्यतः समाः।
परितः स्वसमायामा निम्नोन्नतविवर्जिताः॥ १९॥

अत्र भोजराजः —

"क्रमेण सर्वकुण्डेषु तिस्रो मेखलाः कुण्डानुरूपेण विधातव्याः" इति।

कुण्डस्य पश्चिमे योनिं कुर्याद् दक्षिणतोऽपि वा।
मध्यतो मेखलानां तु सर्वासामुपरि स्थिताः॥ २०॥

सूर्याङ्गुलायामवती[2] तु योनिरामूलतोऽग्राद् वसुवेददस्रैः।
विस्तारतः स्यात् क्रमशोऽङ्गुलोच्चा द्राङ् निर्गताग्रापि च रत्निकुण्डे॥ २१॥

अरत्न्यादिषु कुण्डेषु द्व्यङ्गुलं द्व्यङ्गुलं पृथक्।
क्रमादायामविस्तारवृद्ध्या योनिर्विधीयते॥ २२॥

अत्र भोजराजः —

"एवं प्रथमकुण्डस्य। शेषाणां द्व्यङ्गुलवृद्ध्या योनिर्विधातव्ये"ति।

मञ्जर्यां च हस्तमात्रकुण्डस्य —

"तालायता जलपतेर्दिशि संस्थिता स्या-
दश्वत्थपत्रसदृशी क्रमशोऽथ निम्ना।
नाभिर्दशाङ्गुलषडङ्गुलतः क्रमेण
विस्तारतश्च चतुरङ्गुलगोलकाग्राः॥" इति च।

चतुरश्रं तु वा वृत्तं कुण्डं नित्ये च शान्तिके।
सार्वकामिकमित्यन्ये चतुरश्रं च वर्तुलम्॥ २३॥

---

१. 'लमा' ख. पाठः. २. 'नीतिं यो' ग. पाठः.

श्रुत्येकांशं तु सीम्नो बहिरपि पुरतोऽथाङ्कयित्वाम्बुनाथे
तन्मानात् सूत्रमन्तर्निहितमुभयतः कोष्ठयोर्भ्रामयित्वा ।
मध्यार्धन्यस्य कर्णान्तिकमपि परतः कोणयोः पूर्वचिह्ने
सूत्रे त्वास्फाल्य योनिप्रतिममपि भवे²त् कुण्डमश्वत्थपत्रम् ॥ २४ ॥

चतुरश्रं युगांशांशं कृत्वान्त्यं चोत्त³रे त्यजेत् ।
भागं त्वनेन प्राक्प्रत्यग्बहिरङ्कौ निधाय तु ॥ २५ ॥

तद्वद् दक्षिणतो मध्यस्थितसूत्रभ्रमाद् द्वयोः ।
अर्धचन्द्रसमाकारं कुण्डं भवति शोभनम् ॥ २६ ॥

वेदाश्रे चतुरंशके भुजमिते प्रागंशमाप्याद् बहिः
क्षिप्त्वा मध्यमवारुणाङ्कनिहिते सूत्रे द्विधा भ्रामिते ।
स्यातां द्वौ शफरौ तयोश्च पुरतश्चाङ्केऽथ सूत्रत्रयं
क्षिप्त्वा तत्समखाततो भवति तत् कुण्डं त्रिकोणाह्वयम् ॥ २७ ॥

षष्ठांशं पूर्वनिहितं गृहीत्वा नैर्ऋतस्थितम् ।
वायव्यान्ते च सूत्रे द्वे क्षिप्त्वा वा स्यात् त्रिकोणकम् ॥ २८ ॥

मध्यबिन्दुस्थितं सूत्रं प्राग्भुजाद् द्व्यङ्गुलं बहिः ।
परिभ्रम्य भवेत् कुण्डं वर्तुलं तत् सुशोभनम् ॥ २९ ॥

बाह्यस्थं षष्ठमंशं शतमखवरुणाशाश्रितं वेदकोणे
मध्ये संस्थाप्य सूत्रं सममिह तु तयोर्भ्रामयित्वा तु बाह्ये ।
चत्वारस्तत्र मत्स्यास्तदनु धनददिग्दक्षिणस्थे च सूत्रे
तत्रस्थेष्वेषु चिह्नेष्वथ समपतितैः स्यात् षडश्रं हि कुण्डम् ॥ ३० ॥

वृत्तकुण्डेऽब्जपत्राणि कुर्यात् तन्मेखलोपरि ।
कुण्डार्धमायतान्यष्टौ मध्ये तत्कर्णिका भवेत् ॥ ३१ ॥

पद्मोक्तलक्षणेनैवं कृत्वा स्यात् पद्मसंस्थितिः ।

आदित्याङ्गांशमन्तर्बहिरिह परितो दिक्षु सम्भ्राम्य ताभ्यां
द्वाभ्यां मत्स्यौ भवेतां दिशि दिशि पतितैस्तेषु सूत्रैर्यथावत् ।

१. 'द' ख. पाठः. २. 'वे कु', ३. 'रं', ४. 'स्य', ५. 'स्थितम्' ग. पाठः.

कुण्डं स्यादष्टकोणं सुरुचिरमथवाप्यर्धदिक्सूत्रकोणा-
च्छिष्टाप्यैन्द्राच्छरांशात् कृतशफरयुगाज्जातमीनाष्टकैर्वा ॥ ३२ ॥

क्षेत्रे[1] त्रिपञ्चाङ्गुलमात्रवृत्तं त्रिभिस्त्रिभिश्चाङ्गुलकैर्विभज्य ।
रेखांशकान् पञ्चदशात्र कुर्यात् कोणान्तराणि त्रिभिरंशकैः स्युः ॥ ३३ ॥

स्थित्वा तु बिन्दावथ पञ्चधास्मिन् सूत्राणि मूर्याङ्गुलमायतानि ।
दत्त्वा[2]ग्निमध्येन समं विभक्तैः सूत्रैर्हि कोणद्वयसन्धयः स्युः ॥ ३४ ॥

बिन्दोस्तु कोणान्तगसूत्रमानात् संभ्राम्य तत्क्षेत्रचतुर्थभागात् ।
बिन्दुस्थसूत्रभ्रमणं विधाय स्युः सन्धयः पञ्च तथात्र सूत्रैः[3] ॥ ३५ ॥

**पञ्चकोणकुण्डाधिकारः ।**

---

चतुरश्रं तु संसाध्य ह्यष्टधा विभजेत् पुनः ।
षट्पञ्चाशच्च कोष्ठानां द्विशतं चात्र वै भवेत् ॥ ३६ ॥

षण्णां षड्भिस्तु कोष्ठैर्लिखतु सरसिजं मध्यदेशेऽस्य बाह्ये
पङ्क्त्या पीठं च पीठाद् बहिरपि परितः पङ्क्तियुग्मेन वीथीम्[4] ।
तद्बाह्ये पङ्क्तियुग्मे [5]दिशि विदिशि तथा द्वारकण्ठोपकण्ठाद्
गण्डांश्चैवोपगण्डान् रजनिचरमरुद्वह्निशर्वेषु कोणान् ॥ ३७ ॥

"कण्ठोपकण्ठात् कपोलोपकपोलात् शोभोपशोभा" इति केचिदाहुः ।

पद्मक्षेत्रस्थदिक्सूत्रे संस्थाप्यान्यद् विमृज्य तु ।
[6]बहिर्द्वादशकं भागं त्यक्त्वान्यत् परिवर्तयेत् ॥ ३८ ॥

क्षेत्रं चतुर्धा विभजेत् तु वृत्तं सूत्रं परिभ्राम्य समं क्रमेण ।
तत्कर्णिकाकेसरपत्रसन्धिच्छे[7]दावसानानि भवन्ति तानि ॥ ३९ ॥

पूर्वं द्वादशकांशं यत् त्यक्तं तद् भ्रमयेद् बहिः ।
पञ्चमं तद् भवेत् क्षेत्रं व्योमाख्यं तद् दलाग्रकम् ॥ ४० ॥

प्रसार्य कोणसूत्रे द्वे कोणादिङ्मध्यमेन तु ।
चत्वारि सूत्राण्यास्फाल्य सूत्रषोडशकं भवेत् ॥ ४१ ॥

---

१. 'त्र' ग. पाठः. २. 'त्रि' ख. पाठः. ३. 'त्रे', ४. 'थम्' ग. पाठः.
'शि दिशि च त', ६. 'वहिर्द्वा' ख. पाठः. ७. 'च्छा' ग. पाठः.

दलान्तसिद्ध्यै दलसन्धिमध्ये निधाय सूत्रं तु दलान्तमानम् ।
दलान्तरालद्वयसंभ्रमोत्थैः शशाङ्कखण्डैस्तु दलं प्रसिध्येत् ॥ ४२ ॥

पञ्चषोडशसूत्राणां मध्यं सूत्रैर्विभज्य तु ।
द्वात्रिंशत् खण्डसूत्राणि स्युर्दलाग्रवृतौ समम् ॥ ४३ ॥

दलाग्रसूत्रोदयपार्श्वसूत्रयोरग्रास्थितं सूत्रमथास्य मूलतः ।
दलाग्रसूत्रान्तमुपानयेल्लिखन्नेवं दलाग्रं तु भवेन्मनोहरम् ॥ ४४ ॥

स्याच्छालिपिष्टं सितचूर्णमिष्टं हारिद्रमीषत्सितयुक्सुपीतम् ।
कौसुम्भसिन्दूरकधातुरक्तं दग्धैर्यवाद्यैरपि नीलचूर्णम् ॥ ४५ ॥

शम्यब्जबिल्वादिदलैर्यज्ञियैः श्यामलं स्मृतम् ।
तत्तद्वर्णैस्तु वा धान्यैः पूरयेन्मण्डलानि वै ॥ ४६ ॥

शक्तस्तु वाञ्छेद् यदि सिद्धिमग्र्यां तद्वर्णरत्नैरिह मण्डलानि ।
आपूरयेन्मौक्तिकपुष्यरागैर्माणिक्यनीलैर्हरितैश्च रत्नैः ॥ ४७ ॥

"एवंविधेषु चूर्णेषु सिद्धिकामो मुक्ताविद्रुमादिकैस्तदेवं कुर्याद्"
इति भोजराजः ।

"रेखास्तु सर्वाः सर्वत्र शुक्लाः स्युर्मध्यमामिताः ।
द्विहस्तेऽङ्गुष्ठमात्रा वा हस्ते चानामिकासमाः ।
द्विहस्तेऽङ्गुष्ठमात्राः स्युर्हस्ते मध्यमया मिताः ॥"

इत्यन्ये ।

मध्ये सुपीता खलु कर्णिका स्यात् तस्यां तु बीजानि नवासितानि ।
द्वे द्वे पृथक् केसरके दलानां मध्येषु लेख्ये कुटिलाग्रमीषत् ॥ ४८ ॥

मूले तनून्यापीतानि मध्ये स्थूलारुणान्यपि ।
अन्ते द्राक् तनुपीतानि तदन्तेऽल्पसितानि वै ॥ ४९ ॥

"मूलमध्याग्रेषु पीतरक्तशुक्लं केसरजालमि"ति भोजराजः ।

शुक्लानि तान्यष्टदलानि कुर्यात् समानि तुङ्गाग्रमनोरमाणि ।
भुक्त्यै तथा प्राञ्जलिकानि मुक्त्यै स्मरादियोगेषु शिताग्रवन्ति ॥ ५०

१. 'तो ख', २. 'ज्जा', ३. 'न्वू', ४. 'पिण्डादि', ५. 'दि' ख. पाठ
६. 'ध्य' ग. पाठः. ७. 'थो' ख. पाठः. ८. 'यो' ग. पाठः.

अत्राजिते —

"दलाग्राण्यपि सर्वाणि रक्तवर्णानि कारयेदि"ति।

गौरीसरस्वत्यादीनां दलान्यश्वत्थपत्रवत्।
विघ्नेशानां ग्रहाणां च गोकर्णाग्राणि कारयेत्॥ ५१॥

दिक्पालकानामधराग्रकाणि स्युश्चापि नन्द्यादिगणेश्वराणाम्।
विघ्नेशपद्मोद्भवविष्णुसूर्यस्कन्दादिकानां च यथा शिवस्य॥ ५२॥

श्लक्ष्णश्यामेन रजसा दलसन्धींस्तु पूरयेत्।
पीठान्तरालकोणानि[1] संरक्तान्येव कारयेत्॥ ५३॥

पीठं तु शुक्लारुणपीतकृष्णैः पादैस्तथा नीलककीलशोभम्।
गात्रैश्चतुर्भिस्तु विचित्रवर्णैः कुर्याद् यथेष्टं त्वथवापि वर्णैः॥ ५४॥

अत्र तत्त्वसागरे —

"पीठं कोष्ठद्वयं दिक्षु लोप्यं, तथा कोणे त्रीणि त्रीणि विलोपयेद्" इति।

वीथीं[2] लतावितानाद्यैः पत्रकैश्चोपशोभयेत्।
तद्बाह्ये दिक्षु शुक्लेन चतुर्द्वाराणि पूरयेत्॥ ५५॥

दिक्सूत्रकाणामुभयत्र कोष्ठे द्वारार्थमभ्यन्तरपङ्क्तिसंस्थे।
तद्बाह्यपङ्क्तौ त्रितयद्वयं तत् षट्कोष्ठमित्थं विमृशेद् दिशासु॥ ५६॥

कोष्ठत्रयं त्रयं चान्तर्द्वाराणां पार्श्वयोर्द्वयोः।
ऐक्येन शोभासिद्ध्यर्थमेकैकं विमृजेद् बहिः॥ ५७॥

एवं पृथक्कोष्ठचतुष्कवन्तः कण्ठोपकण्ठाः[3] प्रभवन्ति चाष्टौ।
तत्पार्श्वतस्तद्विपरीतवक्रास्तद्वत् कपोलोपकपोलकाः स्युः॥ ५८॥

ततः कोणेषु शिष्टानि षट्कोष्ठानि पृथक् पृथक्।
विमुक्त्यै[4] कोणसिद्ध्यर्थं वृषभानेषु वा लिखेत्॥ ५९॥

नीलेनाच्छाद्य कोणांस्ताञ्छाखान् शुक्लेन वा लिखेत्॥ ६०॥

कण्ठोपकण्ठान् रक्तेन कपोलोपकपोलकान्।
पीतेनाच्छादयेदेवं यथा भूमिर्न दृश्यते॥ ६१॥

---

१. 'ठो', २. 'थं', ३. 'कोणोपकण्ठात् प्र' ग. पाठः. ४. 'मृजे को' ख. पाठः.

बहिर्गुणाद् वै परितः क्रमोक्ताँल्लिखेत् ततः सत्त्वरजस्तमांसि ।
रजोभिरङ्गुष्ठमितांस्तु शुक्लारुणासितान् मध्ययवान्तरांस्तान् ॥ ६२ ॥

भद्रकाधिकारः ।

चतुरश्रेऽष्टधा भक्ते चतुःषष्टिपदे कृते ।
मध्ये[1] कोष्ठचतुष्केण पद्मं पीठं च[2] संलिखेत् ॥ ६३ ॥
तद्बाह्यपङ्क्त्या खलु वीथिका स्यात् तद्बाह्यपङ्क्तिद्वयदिक्चतुष्के ।
द्वाराणि कोष्ठैः खलु वेदसंख्यैः संमृज्य शुक्लानि समानि कुर्यात् ॥६४॥
द्वाराणां पार्श्वयोर्बाह्यपङ्क्तावेकैककोष्ठकम् ।
द्वारेणायोज्य विमृजेत् स्यातां कण्ठोपकण्ठकौ ॥ ६५ ॥
संस्थाप्य कोणेष्वथ कोष्ठमेकं शिष्टैः पृथक् कोष्ठकपञ्चकैः स्युः ।
एकीकृतैर्वेदकपोलकास्ते तावन्त एवोपकपोलकाश्च ॥ ६६ ॥

अत्राजिते —

"कपालं तु भवेत् तेषु पदं पूर्वापरायतम् ।
दक्षिणोत्तरगं चापि भवेदुपकपोलकम् ॥"

इति ।

प्रागुक्तमार्गेण तु कर्णिकाद्यं चापूर्य वीथिं च यथोक्तवर्णैः ।
द्वाराणि शुक्लेन कपोलकास्ते रक्तास्तथा पीतरुचोऽथ च स्युः ॥ ६७ ॥

अत्राजिते बृहत्कालोत्तरे च —

"कपोलोपकपोलास्तु वह्निकोणादिषु क्रमात् ।
रक्तं पीतं तथा श्यामं श्वेतं च परिकल्पयेत् ॥"

इति ।

वह्न्यादिकोणकोष्ठानि पीतश्यामासितारुणैः ।
पूरयेद् वाथ सर्वाणि कृष्णेन परिपूरयेत्[3] ॥ ६८ ॥
बाह्ये तु शुक्लारुणकृष्णवर्णैः प्राग्वत् समालिख्य गुणत्रयं तत् ।
स्यात् सर्वतोभद्रमिदं तु कोणे षट्कोष्ठकैकीकरणेन भद्रम् ॥ ६९ ॥
मण्डलेष्वपि सर्वेषु शुक्लान्यब्जदलानि तु ।
द्वाराणि चाथ वीथी स्याल्लताद्यैरविशेषिते ॥ ७० ॥

सर्वतोभद्राधिकारः ।

१. 'ध्य', २. 'यं' ख. पाठः. ३. 'वर्तये' ग. पाठः.

द्वात्रिंशदंशे चतुरश्रकेऽस्मिन् सहस्रकं सङ्कृतिसंख्यकं च।
कोष्ठानि तन्मध्यगतत्त्वसंख्यैः कोष्ठैः सरोजं तु लिखेत् पुरोवत् ॥ ७१ ॥

तद्बाह्यपङ्क्त्या पीठं स्यात् तद्बाह्ये सप्तपङ्क्तिभिः।
लिङ्गाष्टकं तु विलिखेद् दिक्सूत्रोभयपार्श्वयोः॥ ७२ ॥
ऋतुवेदाक्षिवेदर्तुकोष्ठैः स्यात् तिर्यगायतैः।
पीठं सकण्ठं[1] ब्रह्मादिजलपादान्तकं शुभम् ॥ ७३ ॥

पीठोपरिष्टात् खलु मध्यपङ्क्त्योर्युग्मस्थतत्कोष्ठचतुष्टयेन।
लिङ्गं भवेत् तद्गतमध्यसूत्रान्मध्यान्तसंवर्तितमस्तकं वा ॥ ७४ ॥

अन्तर्मुखानि लिङ्गानि बुभुक्षूणां समालिखेत्।
विपरीतं मुमुक्षूणामन्तःपीठानि कारयेत् ॥ ७५ ॥

तत्कण्ठपीठोभयपार्श्वसंस्थे भद्रे चतुष्कोष्ठवशाद् भवेताम्।
लिङ्गान्तरालेष्वपि पञ्चविंशैः कोष्ठैस्तु कोणेषु लता विधेयाः ॥ ७६ ॥

गोमूत्रिकावत् संस्पृष्टा रेखास्तत्कोष्ठगा यथा।
तथान्यरेखालोपेन लताः स्युर्विदिगायताः ॥ ७७ ॥
अश्रयन्तरेषु वल्लीनां पत्राण्यप्यथवा[2] लिखेत्।
वल्ल्यादौ सक्तमूलानि[3] कुटिलाग्रादिकान्यपि ॥ ७८ ॥
तद्बाह्ये पङ्क्तियुग्मेन वीथीं प्राग्वत् तु मार्जयेत्।

वीथीं तथा कल्पलताविशेषैराभूष्य तद्बाह्यवृतित्रयेऽपि।
कोष्ठानि वेदर्तुवसुप्रसंख्यं द्वारार्थमन्तः प्रभृतीह लुम्पेत् ॥ ७९ ॥

शोभोपशोभेऽपि स्यातां द्विचतुष्षड्विलोपतः।
त्रिःसप्तकोष्ठानि पृथक् कोणे कोणे तु मार्जयेत् ॥ ८० ॥

पद्मादिकं भद्रकवत् तु सर्वमाभूषयेत् पञ्चविधैस्तु चूर्णैः।
लिङ्गाष्टकं पञ्चमुखोक्तवर्णैरिच्छानुरूपं परिपूरयेद् वा ॥ ८१ ॥

इतीदं पार्वतीकान्तमुक्तं प्रासादमण्डलम्।
अष्टलिङ्गलतापद्मवीथीप्राकारमण्डितम् ॥ ८२ ॥

**पार्वतीकान्तप्रासादाधिकारः।**

---

१. 'पद्मान्त' ग. पाठः. २. 'पा', ३. 'कू', ४. 'ता' ख. पाठः ५. 'पि' ग. पाठः.

चतुरश्रं चतुर्हस्तं क्षेत्रं विंशतिभागिकम् ।
स्याच्चतुःशतकोष्ठं तन्मध्येऽब्जं तत्त्वकोष्ठकैः ॥ ८२ ॥

पङ्क्त्यैकया पीठमथैकया स्याद् वीथी ततः पङ्क्तिचतुष्टयेन ।
तद्द्वारलिङ्गैः परितो लताः स्युस्तद्बाह्यपङ्क्त्यापि च बाह्यवीथी ॥ ८३ ॥

कुर्याद् भद्रकवत् पद्मपीठवीथीर्यथाविधि ।
प्रतिपङ्क्तिद्विकोष्ठाष्टकोष्ठैर्द्वाराणि दिक्ष्वपि ॥ ८४ ॥

वीथ्यन्तरा द्वारनिबद्धकोष्ठत्रयेण भूपीठमथैककोष्ठम् ।
स्यात् कण्ठपीठं त्वथ तोयपट्टं कोष्ठैस्त्रिभिर्लिङ्गमथैककोष्ठम् ॥ ८५ ॥

अधश्चोर्ध्वं च तत्कोष्ठात् पीठकोष्ठचतुष्टये ।
कोष्ठान्तः कोणगं सूत्रं कोष्ठसूत्रार्धमानतः ॥ ८६ ॥

भ्रमयित्वा त्यजेद् बाह्ये खण्डिताश्रिचतुष्टयम् ।
पीठमेवं भवेद् रम्यं द्वादशाश्रैरलङ्कृतम् ॥ ८७ ॥

प्राग्वत् समापूर्य तु वर्णचूर्णैः[1] पद्मादिवीथ्यन्तमशेषबिम्बम् ।
ख्यातं लतालिङ्गसमुद्भवाख्यं तन्मण्डलं शङ्करवल्लभं यत् ॥ ८८ ॥

लतालिङ्गोद्भवाधिकारः ।

---

क्षेत्रे षोडशधाभक्तचतुरश्रे चतुर्दिशम् ।
पार्वतीकान्तवत् कोष्ठैः कुर्याल्लिङ्गचतुष्टयम् ॥ ८९ ॥

मध्ये विशिष्टैरपि वेदकोष्ठैर्लिङ्गान्तरालेष्वपि तत्प्रसंख्यैः ।
चतुर्दलाब्जं स्वयमेव तैः स्याल्लिङ्गेषु संवर्तितमस्तकेषु ॥ ९० ॥

भद्राष्टकं स्यात् कण्ठेषु लताः कोणेषु पूर्ववत् ।
लिखित्वा मण्डलं तत् स्यात् पञ्चब्रह्माभिधानकम् ॥ ९१ ॥

मध्येऽम्बुजे वर्तुलकर्णिका स्यात् पीता च रक्ता तनुकेसराली ।
ईशस्तु मध्ये पुरुषादयोऽपि स्ववर्णदिग्लिङ्गगता भवन्ति ॥ ९२ ॥

अस्यैव तु लतास्थानेष्वालिख्य स्वस्तिकानि तु ।
कोणार्धपङ्क्त्योर्वीथी स्याद् गौरीतिलकमण्डले ॥ ९३ ॥

---

१. 'कर्णपूर्णैः' ख. पाठः.

नाभेः समीपे प्रथमं तु कोष्ठं वक्रायतं द्वेऽथ पुनर्विलुम्पेत् ।
तद्दक्षिणावर्तचतुष्पथाङ्कं स्यात् स्वस्तिकं चान्तरवीथियुक्तम् ॥ ९४ ॥

श्यामपीतासितारक्तैर्मार्गानाभूषयेत् क्रमात् ।
खण्डवीथीस्तु शुक्लेन लिङ्गादन्येन भद्रके ॥ ९५ ॥

पञ्चब्रह्ममण्डलगौरीतिलकाधिकारः ।

---

क्षेत्रे तथाष्टादशधा विभक्ते कोष्ठानि चास्मिन् त्रिशतं च वेदैः ।
विंशत्यपि स्यात् खलु तत्त्वसंख्यैर्मध्ये सरोजं विलिखेत् पुरोवत् ॥ ९६ ॥

अष्टाशास्वपि षट्त्रिंशत्कोष्ठैः स्युः स्वस्तिकान्यपि ।
एकं त्रीणि ततः पञ्च कोष्ठलोपक्रमः स्मृतः ॥ ९७ ॥

एतत् खलु स्वस्तिकमण्डलाब्जं क्षेत्रेऽथवा द्वादशभागितेऽस्मिन् ।
मध्येऽम्बुजं षोडशकोष्ठकैः स्यात् स्युः स्वस्तिकान्यष्टदिशासु तद्वत् ॥ ९८ ॥

स्वस्तिकान्यपि पद्मं च प्राग्वदापूर्य वर्णकैः ।
स्वस्त्यर्थं स्वस्तिकं शस्तं सर्वदेवाभिनन्दनम् ॥ ९९ ॥

स्वस्तिकाब्जद्वयाधिकारः ।

---

क्षेत्रे तथाष्टादशभागिकेऽस्मिन् तन्मध्यगः स्वस्तिकनाभिमादौ ।
सङ्कल्प्य लुम्पेत् तु चतुष्पथाभं समन्ततः कोष्ठकपञ्चकानि ॥ १०० ॥

कोष्ठमात्रायता रेखाः कुटिलाः स्वस्तिकाकृतौ ।
परस्परपयोधिन्यः स्थाप्याः स्युः शेषलोपतः ॥ १०१ ॥

पञ्चाशदस्मिन् खलु सप्तकं च स्यात् स्वस्तिकानां सह चार्कभद्रैः ।
मध्ये द्विपञ्चाशदपि द्वयं च स्यात् सर्वतोभद्रचतुष्पथानाम् ॥ १०२ ॥

कोणेषु चैककोष्ठानि शिष्टान्याभूषयेत् सितैः ।
नीलपीतारुणश्यामैर्भद्राण्यपि चतुष्पथान् ॥ १०३ ॥

एताद्धि सर्वतोभद्रस्वस्तिकं नाम मण्डलम् ।
सर्वस्वस्तिकमित्येते प्राहुर्यच्छिवयोः प्रियम् ॥ १०४ ॥

---

१. 'द्वि' ग. पाठः.

क्षेत्रेऽथवा षोडशधा विभक्ते मन्वर्कदृग्वस्वृतुभेदिते वा ।
प्राग्वद् विलोमात् खलु मण्डलानि स्युः सर्वतः स्वस्तिकभद्रवन्ति ॥ १०५ ॥

**स्वस्तिकसर्वतोभद्राणि।**

चतुरश्रे द्विहस्ते तु चक्राब्जं पीठवर्जितम् ।
स्यादेकनाभं तल्लक्ष्म भवेन्मानाङ्गुलक्रमात् ॥ १०६ ॥

निधाय सूत्रं त्वथ मध्यबिन्दौ पद्मार्धमानेन नवाङ्गुलेन ।
त्रिभिश्च वस्वब्धिमितैर्भ्रमैस्तैः सरोरुहं नाभ्यरनेमयः स्युः ॥ १०७ ॥

पद्मं पुरोवदालिख्य नाभिं पीतेन पूरयेत् ।
दलतुल्यारके चक्रे दलरेखाः प्रसार्य तु ॥ १०८ ॥

लिखेत् ततस्तेष्वरकान् यथावद् दलाद् द्विसंख्येष्वरकेषु तद्वत् ।
दलाग्रसूत्रैर्दलसन्धिसूत्रैः प्रसारितैस्तावदिहारकाः स्युः ॥ १०९ ॥

विभज्यारभुवं त्रेधा द्वाभ्यामन्तरथाङ्कयेत् ।
मत्स्यवैत् तेष्वथास्फाल्य सूत्राण्येषु लिखेदरान् ॥ ११० ॥

इन्दीवराश्वत्थदलोपमा वा ते मातुलुङ्गाकृतयोऽथवा स्युः ।
अब्जच्छदाभाश्च यवोदरा वा मध्यैः कृशैर्वाथ पिपीलिकाभाः ॥ १११ ॥

अरकास्त्वरुणाः श्यामास्ते स्युरेकान्तराः क्रमात् ।
अन्ते गोरोचनाभाः स्युः पीताः स्युररसन्धयः ॥ ११२ ॥

नेमिं त्रिधा संप्रविभज्य कुर्याच्छुक्लेन मध्ये त्वसितेन बाह्ये ।
पीतेन चान्तः परिपूर्य कोणान् कृष्णेन सस्वस्तिकचिह्नरम्यान् ॥ ११३ ॥

अरसन्ध्यन्तरालस्थो बहिर्नेमेः परिभ्रमेत् ।
अरसन्धेस्तु मध्यस्थो भ्रमयेदरमूलकम् ॥ ११४ ॥

मध्येऽरकाणां स्थित्वा तु भ्रमयेदरमध्यकम् ।
मातुलुङ्गफलाकारा एवं सिध्यन्त्यराः क्रमात् ॥ ११५ ॥

अराग्रसंस्थस्त्वरसन्धिमूलात् सूत्रं तथारोभयपार्श्वसंस्थम् ।
पृथक् समास्फाल्य तथारकाः स्युर्विस्तारितेन्दीवरपत्रकल्पाः ॥ ११६ ॥

---

१. 'न्', २. 'सा' ख. पाठः. ३. 'लाद्युस' ग. पाठः. ४. 'वर्तेष्व' ग. पाठः. ५. 'त्', ६. 'द' ग. पाठः. ७. 'व्द' ख. पाठः. ८. 'रं', ९. 'त्तु' ग. पाठः. १०. 'त्व' ख. पाठः. ११. 'कू' ग. पाठः.

अरमध्यस्थितोऽराग्रं किञ्चित् त्यक्त्वाब्जपत्रवत् ।
अरसन्धेर्भ्रमाच्चाग्रभ्रमादब्जदलारकाः ॥ ११७ ॥

शान्ताग्रमूलाः पृथवस्तु मध्ये कार्यास्तृतीयांशतयारसन्धेः ।
अन्तः प्रविष्टास्तु यवोदराख्याः सिध्यन्ति ते स्युः क्रमशः शिताग्राः ॥११८॥

त्रिधा विभज्यारक्षेत्रं द्वितीयप्रथमांशयोः ।
मध्ये स्थित्वा परिभ्रम्य तृतीयांशे दलाग्रवत् ॥ ११९ ॥

अर्धचन्द्राभरेखाभ्यां पत्राग्रं च समालिखेत् ।
इत्थमश्वत्थपत्राभास्तत्रारोः संभवन्ति हि ॥ १२० ॥

स्थित्वारसन्धेरथ मध्यमांशे तिर्यग्भ्रमाच्चोभयतोऽरकार्धात् ।
रेखाद्वयान्तैः कृशमध्यकर्णाः स्युः पिपीलिकाकोडसमाह्वयाराः ॥ १२१ ॥

अरसन्ध्यन्तरा पुष्पैर्विचित्रैरभिभूष्य तु ।
बिम्बबाह्येऽथवा लिप्ते पुष्पालीभिर्विभूषयेत् ॥ १२२ ॥

उक्तं तु चक्राम्बुजमेकनाभं प्रियं शिवार्याहरिभास्कराणाम् ।
अन्यानि च स्युर्नवनाभकान्तान्यूह्यानि चक्राम्बुजमण्डलानि ॥ १२३ ॥

चक्राब्जाधिकारः ।

---

कर्णिकार्धप्रमाणेन प्राक्स्थसूत्रभ्रमक्रमात् ।
तद्रेखापार्श्वयोगेन मत्स्यद्वादशकं भवेत् ॥ १२४ ॥

सूत्रेषु तेष्वापतितैर्यथावत् सन्धिस्थसूत्रैर्दिनकृच्छताब्जम् ।
अष्टच्छदाब्जस्य समप्रभेदात् स्यादम्बुजं षोडशपत्रशोभम् ॥ १२५ ॥

केसरव्योमरेखान्तसूत्रात् तत्केसराग्रगात् ।
मत्स्यवल्लाञ्छयित्वा स्यात् पञ्चपत्रं तु पङ्कजम् ॥ १२६ ॥

कर्णिकादलसन्धिभ्यां प्राग्वत् षट्पत्रसिद्धये ।
व्योमरेखाकर्णिकाभ्यां दलाग्रस्थं तु सप्तके ॥ १२७ ॥

दलसन्धिकर्णिकाभ्यां दलसन्धौ न्यस्य मत्स्यचिह्नेन ।
नवदलकं स्यात् सूत्रैः पञ्चभिरास्फाल्य पङ्क्तिपत्रं स्यात् ॥ १२८ ॥

---

१. 'यं तृती' ग. पाठः. २. 'तः', ३. 'ना' ।, ४. 'कास्या पि' ख. पाठः ५. 'ध', ६. 'पि' ग. पाठः. ७. 'ह्र' ख. पाठः. ८. 'ह्य', ९. 'स्थस्तु स' ग. पाठः

केसराकाशयोर्मध्यं व्योम्नि विन्यस्य लाञ्छयेत् ।
एकादशच्छदं त्वेवं पद्मं स्यात् सूत्रपाततः ॥ १२९ ॥
पत्राग्रपत्रसन्धिभ्यां पत्राग्रे न्यस्य लाञ्छिते ।
आस्फाल्य तेषु सूत्राणि तत् स्यादभिकृतिच्छदम् ॥ १३० ॥
अतः परं चेद् दलवृद्धिमिच्छेद् दिशानयैवात्र यथाक्रमेण ।
तदूहतो मध्यवशेन सूत्रैर्लिखेत् सरोजानि यथाभिलाषम् ॥ १३१ ॥

दलभेदलक्षणम् ।

---

अर्धचन्द्रादिकुण्डानां लक्ष्मणा सूत्रपाततः ।
अर्धचन्द्रादिबिम्बानि कुर्यात् कामानुसारतः ॥ १३२ ॥
वेदाश्रिके दिग्विदिगन्तरे स्युर्ध्यष्टसूत्रैः पतितैस्तु दीर्घैः ।
द्वात्रिंशदंशाः परितोऽथ तेषु क्षेत्राणि पञ्च भ्रमणाद् भवन्ति ॥ १३३ ॥
अष्टाङ्गुलैः स्यात् कमलार्धमादौ त्रिभिस्तु पीठं त्रिभिरेव नाभिः ।
वीथीश्चतुर्भिस्तु षडङ्गुलैः स्युर्द्वाराणि शोभास्त्वपि चोपशोभाः ॥ १३४ ॥
प्राग्वत् सरोजं त्विह वृत्तपीठं नाभिर्गुणैर्हंसशराब्जशङ्खैः ।
वीथिर्भवेद् वारचतुष्टयाढ्यं वर्णक्रमाद् भद्रकवद् विधेयम् ॥ १३५ ॥
द्वारादिषु विशेषोऽत्र स्यात् तत्क्षेत्रं द्विधा भ्रमात् ।
अन्तर्वेदांशकैर्बाह्यैर्द्वाराणि स्युः षडंशकैः ॥ १३६ ॥
प्राग्वच्च शोभोपशोभे स्तां कोणलक्ष्मापि कथ्यते ।
अन्तर्मुखास्ते कलशास्तु कोणा वेदांशवक्त्रा द्वितयांशकण्ठाः ।
तत्कोणपार्श्वान्तविवर्तने स्युः पृथूदरावर्तितविष्टरान्ताः ॥ १३७ ॥
मायाचक्राह्वयं त्वेवं शक्तीनां मण्डलं स्मृतम् ॥ १३८ ॥

मायाचक्राधिकारः ।

---

१. 'न्' ग. पाठः. २. 'त्रय' ख. पाठः. ३. 'म्या', ४. 'कम्'.
५, ६. 'ले', ७. 'र्गे' ग. पाठः

वक्ष्येऽथ बिम्बं त्रिपुराभिधानं क्षेत्रं तु कुर्याच्चतुरश्रदीर्घम् ।
युक्त्या पुरोवच्च परैश्च सूत्रैः स्याद् द्वित्रिहस्तायतविस्तृतं तत् ॥ १३९ ॥

प्रागायतं त्रयस्त्रिंशत्सूत्राण्यत्र निपातयेत् ।
याम्योदगायतं सप्तचत्वारिंशच्च संख्यया ॥ १४० ॥

कोष्ठानि चास्मिन्[1]थवर्य(?)संख्यं मध्येऽस्य कोष्ठैरपि तत्त्वसंख्यैः ।
स्यात् पङ्कजं तत्परितस्तु पाङ्क्तिं त्यक्त्वास्य पूर्वापरतोऽम्बुजे स्ताम् ॥ १४१ ॥

परितोऽब्जत्रयस्यात्र पङ्क्तिमेकां विलोपयेद् ।
चतुरश्राकृतिर्दीर्घा सा चान्तर्वीथिसंज्ञिता ॥ १४२ ॥

तद्बाह्यपङ्क्त्या परितस्तु पीठं कोष्ठैस्तथा पञ्चभिरस्य कोणात् ।
कुर्याच्च पूर्वापरदक्षिणोदग्गात्राणि वस्वष्टचतुष्कवेदैः ॥ १४३ ॥

कोणागात्रकमध्येषु पञ्च कोष्ठानि लोपयेत् ।
पीठमेकं त्रिपद्मानां स्याद् दीर्घचतुरश्रकम् ॥ १४४ ॥

तद्बाह्ययाम्योत्तरपूर्वपश्चाल्लिङ्गानि षट्सप्तककोष्ठकैः स्युः ।
तिर्यग्रसैस्तद्दिशि सप्तपाङ्क्तैः कोष्ठैर्यथोक्तं चतुरश्रकेषु ॥ १४५ ॥

लिङ्गानां पार्श्वयोर्द्वन्द्वे चतुरश्रे विलोपयेत् ।
पृथक्पृथग्[2]वै षट्त्रिंशत्कोष्ठैस्तानि भवन्ति हि ॥ १४६ ॥

तद्वत् कोणचतुष्केषु षट्त्रिंशत्संख्यकोष्ठकैः ।
दीर्घेषु चतुरश्रेषु नृत्यद्धंसान् समालिखेत् ॥ १४७ ॥

रक्तानि पद्मच्छदनानि लक्ष्मीजयार्थसौभाग्यकराणि कुर्यात् ।
शुक्लानि विद्याकविता[3]दिसिद्ध्यै शेषं पुरोवत् खलु कर्णिकाद्यम् ॥ १४८ ॥

अन्तर्वीथीं तु पीतेन चतुरश्रेष्वथाष्टसु ।
शङ्खौ चक्रे च संलिख्य चत्वार्यब्जानि चालिखेत् ॥ १४९ ॥

वीथ्यां लता स्यात् परिशिष्टपङ्क्तित्रयेण दिग्द्वारचतुष्टयाद्यम् ।
लुम्पेत् षडष्टौ दश कोष्ठकानि द्वारद्वये दक्षिणतश्च सौम्ये ॥ १५० ॥

शोभोपशोभासिद्ध्यर्थं कोष्ठान्युत्तरयाम्ययोः ।
चतुःषडष्टौ प्रागाप्ये द्वे चतुःषट् च लोपयेत् ॥ १५१ ॥

---

१. 'ष्ट', २. 'गै' ख. पाठः. ३. 'षितानि स' ग. पाठः.

द्वारे प्राक्पश्चिमे स्यातां वेदर्तुवसुकोष्ठकैः ।
त्रिसप्तकोष्ठैः कोणाः स्युस्तत्पादाश्चर्तुकोष्ठकैः ॥ १५२ ॥

त्रिपुरामण्डलाधिकारः ।

---

क्षेत्रे विंशतिधा द्विधा पुनरिदं निर्भिद्य वेदाश्रकं
कोष्ठानां खलु षट्शतं दशशतं चात्रास्ति तन्मध्यतः ।
षट्त्रिंशत्कचतुष्टयेन तु भवेल्लिङ्गं सपीठं महत्
तत्रिंशद्द्वयनागषोडशमितैः कोष्ठैस्तु पीठादिकम् ॥ १५३ ॥

पाङ्क्तिं तत्परितो विमृज्य तु बहिःपङ्क्त्या च पीठं भवेत्
तद्बाह्ये मुनिपाङ्क्तितत्त्वगणनाकोष्ठैः पृथक् पूर्ववत् ।
पद्मानि क्रमशोऽष्टदिक्षु विलिखेल्लिङ्गे च तत्पार्श्वयोः
षड्भिर्विंशतिकोष्ठकैश्च परितः पङ्क्तिद्वयाद् वीथिकाः ॥ १५४ ॥

ईशानादिब्रह्मवर्णानि चास्मिन् लिङ्गानि स्युः शिष्टलिङ्गानि पश्चात् ।
व्यस्तैर्वर्णैः शुक्लरक्ताच्छरक्तैः प्रागाद्यब्जे संलिखेदुक्तमार्गान् ॥ १५५ ॥

संयुक्तान् क्रमशः प्रदक्षिणमथो वीथ्यां तु शङ्खाँल्लिखे-
च्छुक्लाभान् यदि मण्डलं भवति तद्यच्छङ्खमालाह्वयम् ।
हंसाश्चेदिह हंसमालमृतुभिः स्यादष्टदिक्संस्थितै-
र्द्वाराणि त्रिशरांश्च कोष्ठविहिताः शोभाश्च पङ्क्तित्रये ॥ १५६ ॥
कोणाः स्युः सप्तविंशत्या कोष्ठानां तत्रिपङ्क्तिषु ।
कृष्णेनाच्छाद्य तत्रापि स्वस्तिकाब्जादिकं लिखेत् ॥ १५७ ॥

लिङ्गोदरशङ्खमालाद्यधिकारः ।

---

चक्राब्जादितराणि शक्तिशिवयोः पूजासु दीक्षादिके
शस्तान्यत्र पवित्रकादिषु तथा सस्वस्तिलिङ्गान्यपि ।
चक्राब्जान्यपि भद्रकाणि सवितुर्विष्णोश्च लक्ष्म्या विधेः
शक्तीनां त्रिपुराख्यशङ्खकलशा मायाम्बुजं चोदितम् ॥ १५८ ॥
यथोदितस्तु शक्तीनां तथेन्द्रस्मरभोगिनाम् ।
विघ्नेशानलषड्वक्त्राः पूज्याः स्युः स्वास्तिकेष्विह ॥ १५९ ॥

सर्वे सर्वेषु वा पूज्यास्तत्तत्कर्मानुसारतः ।

इति कुण्डमण्डलविधिः प्रधानतः कथितः शिवादिसुरपूजनोचितः ।
बहुधा निरूप्य विविधान् शिवागमानिह साधकेन्द्रमनसां प्रियङ्करः॥१६०॥

इति श्रीमदीशानशिवगुरुदेवपद्धतौ तन्त्रसारे कुण्डमण्डलविधिः
षष्ठः पटलः ।

---

## अथ सप्तमः पटलः ।

वक्ष्ये स्रुक्स्रुवयोश्च लक्षणमथो स्रुग्घस्तमात्रायता
पालाशी खदिरोद्भवापि च तथा स्याच्छामिली शोभना ।
वेदाश्रं तु मुखं स्वराङ्गुलमितं श्रेष्ठं रसैर्वा शरै-
र्मध्यं चाप्यधमं च निम्नमिह तन्मध्ये त्रिभागास्[1]त्वतम् ॥ १ ॥
विस्तारेण समं हि खातमपि तद् वृत्तं बहिर्मेखला-
स्तिस्रः स्युः कमलं तथैव परितस्तासां तु बाह्ये भवेत् ।
कण्ठो गोलकविस्तृताङ्गुलमितो दैर्घ्येण तस्योर्ध्वतः
स्यादग्रं चतुरङ्गुलायतमथो विस्तारतस्तत्समम् ॥ २ ॥
कण्ठस्याप्यथ मध्यवर्ति सुषिरं तद् वै त्रिकोणायतं
निर्गच्छेद्धि यथायतं तदवटं यावत् कनिष्ठा विशेत् ।
तत्पृष्ठं कमलाङ्कितं खलु मुखं सर्वं गजोष्ठोपमं
शिष्टं वर्तुलदण्डमस्य तु भवेदग्रं सरोजाङ्कितम् ॥ ३ ॥
दण्डाग्रं परिणाहतः सरसिजस्याधो यथर्त्वङ्गुलं
स्थूलोऽसौ क्रमशः प्रकोष्ठमिव तन्मूलं च वस्वङ्गुलम् ।
तत्र स्याद् वृषभोऽथवा सरसिजं श्लक्ष्णाकृतिः सर्वतो
निर्दोषः शुभदेशजान् क्षितिरुहाञ्छित्वा स्रुचं कारयेत् ॥ ४ ॥
स्रुग्जातिस्तु भवेत् स्रुवं सुविहि[2]तं तालद्वयायामकं
कुर्याद् वर्तुलमङ्गुलेन वदनं तस्यावटेऽर्धाङ्गुले ।

---

१. 'त्रि', २. 'स्रुचि हि' ख. पाठः.

भित्तिर्मध्यगता स्मृता यवमिता तद्गर्तयोः श्लक्ष्णयोः
कर्षाज्यस्थिति गोष्पदाकृति च तत्पृष्ठे यवाभ्यां स्फिजौ ॥ ५ ॥

स्फिङ्मध्येन यवप्रमाणविहिता रेखा च वक्त्रादधः
कण्ठः पङ्कजलक्षणस्तु तदधो दण्डः सुवृत्तः समः ।
दण्डाग्रं परिणाहतोऽङ्गुलमितं मूलं ततोऽध्यर्धतः
स्याद् गोपुच्छनिभं गलात् प्रभृति तत् स्थूलं हि मूलं यथा ॥ ६ ॥

बाहुमात्रियोऽरत्निमात्रियो वा स्रुच इत्यन्ये ।

स्रुक्स्रुवाधिकारः ।

---

भित्त्वा शोभनशाखिकां यदि भवेच्छम्युद्गताश्वत्थजा
नो चेत् केवलपिप्पलात् तदरणिर्भान्वङ्गुलैरायता ।
नाहोऽस्यास्तु षडङ्गुलेन तु शिरो मूलेऽङ्घ्रिरग्रे स्मृतो
योनिर्मध्यगताङ्गुलैः श्रुतिमितैर्मन्थानयोग्या भवेत् ॥ ७ ॥

अश्वत्थेन तथोत्तरारणिरपि स्यात् षड्भिरेवाङ्गुलैः
कुर्याद् भ्रामकमस्य खादिरमृजुं नेत्रं च रज्जुं दृढाम् ।
तत्राग्निं जनयेत् तथेन्धनमपि त्वग्वर्जितं सारवद्
भिन्नं शस्ततरूद्भवं धमनमप्यग्नेर्धवित्रादिना ॥ ८ ॥

अरण्यादिविधिः ।

---

वक्राः शीर्णदलाः कृशाः कृमिहता भिन्नास्त्वशस्त्राहता
ह्रस्वाः स्थूलगतत्वचोऽप्युपहता दीर्घाग्निदग्धादयः ।
वर्ज्याः स्युः समिधः शुचिस्थलभुवः शेषाः समं छेदिता
मध्यानामिकयोस्तु नाहसदृशाः शस्ताः कनिष्ठाधमाः ॥ ९ ॥

तालायतास्तु समिधः खलु शान्तिकादौ सप्ताङ्गुला भ्रमणचाटनकेषु शस्ताः ।
विद्वेषसाधनविधौ चतुरङ्गुलास्ता वक्राः षडङ्गुलमिता अपि मारणेषु ॥ १० ॥

आकृष्टिवश्यविषयेषु शराङ्गुलाः स्युः प्रादेशमात्रसमिधोऽप्यविशेषकृत्ये ।
क्षुद्रेषु पृष्ठमनले जुहुयात् तथाग्रं चाग्नौ जुहोति हि शुभेषु यथोपदेशम् ॥११॥

इध्मोऽष्टादशाभिः समिद्भिरुदितः प्रादेशमात्रोऽथवा
रत्न्यायाममितः क्वचित् परिधयो हस्तायताः स्युस्त्रयः ।
दीर्घो दक्षिणतस्तु पश्चिमशयः स्थूलस्तनुर्ह्रस्वकः
सौम्ये कौशिकजाश्च पालककुशाः श्रेष्ठा हि दर्भाः क्रमात् ॥ १२ ॥

व्यग्रा हस्तनखाहृताः कृमिहताः कर्मान्तरा योजिताः
याम्या व्याघ्रविलङ्घनाद्युपहता धूम्रोर्ध्वशुष्कादयः ।
वर्ज्याः श्यामलकोमलाः प्रतिनवाल्लनार्द्रशुष्कास्तथा
दर्भाः स्युर्यदिहाग्निकार्यपटले वेण्यादिकं चोदितम् ॥ १३ ॥

तत्र त्रिंशद्दर्भदलकृता वेणिः । अष्टचत्यष्टिधृत्यतिधृतिसंख्या वा दर्भाः परिस्तरणे स्युः । तत्त्वसंख्यादर्भैर्बद्धं कूर्चं ज्ञानखङ्गः । दर्भद्वयेन सामान्यम् । दर्भपञ्चकेन विशेषकूर्चमिति संहिताटीकायाम् ।

पञ्चभिः पञ्चभिर्दर्भैः प्रणीताप्रोक्षणीविधौ ।
कूर्चद्वयं भवेत् सप्तदशभिर्ब्रह्मकूर्चकम् ॥ १४ ॥

द्वादशाङ्गुलकं दण्डं ब्रह्मग्रन्थ्येकमङ्गुलम् ।
तदग्रं त्र्यङ्गुलायामं कूर्चानां तु प्रकल्पयेत् ॥ १५ ॥

मध्येन ग्रथितं तु दर्भयुगलं प्रादेशमात्रं भवेत्
संस्कारे तु पवित्रकं स्मृतमथ द्वन्द्वं च विद्योतने ।
स्रुक्सम्मार्जनके चतुष्टयमिह स्याद् वै कुशानां घृते
दर्भाग्रद्वयमङ्गुलायतमथात्रार्काङ्गुलं प्रस्तरे ॥ १६ ॥

तालायताभ्यां दर्भाभ्यां ग्रथितं चतुरङ्गुलम् ।
पवित्रं स्याद् द्विजातीनां त्रिभिः क्षुद्रेषु हस्तयोः ॥ १७ ॥

ब्रह्मग्रन्थिर्द्विजातीनां स्मृतो हस्तपवित्रके ।
केवलश्चानुलोमानां दूर्वैव स्त्रीचतुर्थयोः ॥ १८ ॥

दशोत्तरशतं त्वेवं दर्भाः स्युः प्रस्तरं विना ।

इति बौधायनमतम् ।

इध्मबर्हिषां विधिः ।

---

भूमिः स्थण्डिलसंज्ञिता सपदि या गोगोमयालेपिता
गोकर्णाष्टकमात्रकं षडथ वा गोचर्ममात्रं स्मृतम् ।
नद्यादेः सिकताः शुभास्तु धवलाः प्रस्थैर्मिताः पञ्चभिः
सामान्येन तदाह होमविषये बोधायनः स्थण्डिले ॥ १९ ॥

स्थाल्याज्यस्य भवेच्छरावसदृशी विस्तारतोऽष्टाङ्गुला
विस्तारार्धसमुच्छ्रयापि च भवेन्नालं च वेदाङ्गुलम् ।
विस्तारेण षडङ्गुलोच्छ्रितसमं पात्रं प्रणीताम्भसां
स्यादष्टाङ्गुलविस्तृतोच्छ्रयसमा नालान्विता प्रोक्षणी ॥ २० ॥

अत्र पौष्करे—

"सर्वत्र स्वर्णरजतताम्रमृन्मयानि पात्राणि उत्तममध्यमाधमफलानि भवन्ति" इति ।

अष्टाभिः कुडुबैः प्रपूरितचरुः स्थाली स्मृता चाधमा
मध्यार्कैर्वसुयुग्मकैः परिमिता स्यादुत्तमा ताम्रजा ।
श्रेष्ठाद्यास्त्वधमास्त्रिसप्तकमिता दर्व्यङ्गुलानां भवेद्
दैर्घ्यात् सप्तशराङ्गुलैरिह शिरोवृत्तं तु पुच्छं द्वयात् ॥ २१ ॥

शालीनां सिततण्डुलाः सकलमा नीवारजाः षाष्टिकाः
संशुद्धास्तुषशर्करादिरहिताः शुक्लार्जिताः[2] स्युश्चरोः ।
श्रेष्ठं यत् स्वपशोर्नवं घृतमथ क्रीतं नवं मध्यमं
क्रीताज्यं यदनूतनं तदधमं गव्यं भवेद् गालितम् ॥ २२ ॥

क्षौद्रं गन्धरसाद्यदूषितमपि क्रीतं पुनर्गालितं
ग्राह्यं क्रीतसितोपलाद्यभिनवं खण्डं गुलं चैक्षवम् ।
पूर्वं पूर्वमिह प्रशस्तमखिलं शुद्धं च शुक्लार्जितं
होमादेश्च तिलादिधान्यमखिलं संशोध्य तु क्षालितम् ॥ २३ ॥

---

१. 'च', २. 'स्ति' ग. पाठः.

यच्चान्यत् फलमूलवस्तु सुरसं ग्राह्यं विशुद्धं नवं
तत्राङ्गुष्ठमिताहुतिस्तु कथिता ह्यन्नस्य शाल्यादिषु ।
स्यात् पञ्चाङ्गुलिभिर्धृतं द्रवरसेष्वुक्तं स्रुवापूरितं
लाजानां खलु मुष्टिरेव कुसुमेष्वेकैकमब्जादिषु ॥ २४ ॥

वल्लीनां चतुरङ्गुलं कणतिले सक्तुष्वपि स्यान्मृगी
साङ्गुष्ठा खलु मध्यमाङ्गुलियुता नाम्ना मृगीसंज्ञिता ।
गन्धानां चणकीमितं तु बदरीबीजोपमं गुग्गुलो-
र्भक्ष्याणां च महाफलादिषु भवेदक्षप्रमाणाहुतिः ॥ २५ ॥

खर्जूरेङ्गुदगोस्तनीबदरिकाजम्बूफलानां तथा
पत्राणां पृथगेकमेकमुदिता पर्वैकमिक्षोरपि ।
नानाभक्ष्यविमिश्रहोमविषये पञ्चाङ्गुलीभिर्धृतं
दूर्वाग्रत्रितयं तथैव समिधामेकैकमेवाहुतिः ॥ २६ ॥

**आहुतिप्रमाणम् ।**

---

स्याद् वर्धन्यपि पूर्णभारसलिला कुंभश्च खार्यम्बुभृद्
द्रोणाम्भःपरिपूरितस्तु कलशः पूर्णः शिवात् कर्करी ।
पूर्णा स्याद् घटिकाढकेन कुडुबद्वन्द्वं शरावं भवे-
दापूर्णं कुडुबेन वा प्रसरतः शङ्खश्च दीपस्तथा ॥ २७ ॥

**पात्रमानम् ।**

---

वक्ष्ये शुद्धिमपीह पात्रविषयां द्रव्यादिकानां तथा
यावद् गन्धविलेपनाद्यपगमस्तावज्जलैः क्षालयेत् ।
चूर्णैरप्यवघर्षयेत् पुनरपि प्रक्षाल्य चोष्णैर्जलैः
पात्राणां भवतीह शुद्धिरधुना शुद्धिर्विशिष्टोच्यते ॥ २८ ॥

सौवर्णं सलिलेन शुध्यति यथा लेपापनोदो भवेत्
पात्रं शुल्बमयं तथाम्लसलिलैस्तारोद्भवं गोमयात् ।

कांस्यं भस्मजलैस्तथा मणिमयं सूर्यांशुभिर्वाम्भसा
मृत्पात्रं दहनेन चेदभिनवं तत्क्षणाद् दारवम् ॥ २९ ॥

दाहादायसशुद्धिरेवमुदिता लौहानि तत्कर्तृभिः
स्पर्शाद् वा तुरगाननाभिगमनाच्छुध्यन्त्यनत्याहतौ ।
शुद्धिश्चर्मसु रज्जुवस्त्रविषये चेत् क्षारवारिप्लवात्
स्याच्चालाबुकवैणवेऽम्बुपवनं गोपालकाघर्षणात् ॥ ३० ॥

शुद्धिः सोदकभाजनेष्वपि भवेत् पर्यग्नि कृत्वा तथा
धान्यानां फलदर्भमूलसमिधां संप्रोक्षणाधावनैः ।
कौशेयादिदुकूलपट्टवसनान्यालब्धरङ्गानि या-
न्यम्भःसेकाविरागकाणि धवलैः शुध्यन्ति सिद्धार्थकैः ॥ ३१ ॥

त्याज्यं दारववैणवादिकमथो भाण्डं तथा मार्त्तिकं
श्लेष्मोच्छिष्टमलादिदुष्टमथवा निर्माल्यसन्दूषितम् ।
स्नेहानामपि शुद्धिरत्युपहतिर्नोचेदभिद्योतना-
च्छुध्येदम्बुजलाशयादिषु निशास्वग्नेः शिखादर्शनात् ॥ ३२ ॥

गोभिर्वाध्युषिता निखानिततलाकृष्टाथवा सूद्धृता
भूः शुध्येद् भवनादिकं च सलिलैः सद्गोमयालेपितम् ।
पुण्याहाद् द्विजभोजनैरपि तथा चोल्लेखनाद् वा स्थलं
शुध्येत् पातकिनाभिभाष्य वचसां शुद्धिर्द्विजाभाषणात् ॥ ३३ ॥

प्राणायामैः शुध्यति देहः समनस्कः स्पृष्टास्पृश्यानप्सु निमग्नः सहचेलः ।
जग्ध्वा यत्तद् वा क्षुतनिष्ठीवनजृम्भास्वाचम्याद्भिश्चान्त्यजशूद्राद्यवलोके[1] ॥३४॥

निःसार्याम्भः कूपजलादेर्महदर्णोवेगात् स्पृष्टं वांशुभिरंशोरिह शुध्येत् ।
सामान्याग्निः प्रोक्षणतोऽन्यत्र गतो वा प्रायश्चित्ताद् वाग्निमुखाच्चाहितवह्निः ॥

गन्धादीनां मन्त्रजलैः प्रोक्षणतः स्याच्छुद्धिः क्षीरे चान्धसि वाज्यं त्वभिघार्य ।
दर्भोद्योताच्छुध्यति नातिप्रहतिश्चेच्छिष्टानामप्येवमिवोह्या परिशुद्धिः ॥ ३६ ॥

---

१. 'कैः' ख. पाठः.

सामान्येयं सर्वगुणानामपि हेतुः कर्मद्रव्यस्वात्मसु शुद्धिर्मनसो या ।
शुद्धिः सा साध्यस्य तु रागाद्यविदुष्टा चेच्चत्वारोऽप्यस्य करस्थाः पुरुषार्थाः ॥

इति श्रीमदीशानशिवगुरुदेवपद्धतौ तन्त्रसारे
स्रुक्स्रुवादिलक्षणं नाम
सप्तमः पटलः ।

---

अथाष्टमः पटलः ।

अथ मन्त्रात्मभूतानां देवतानां यथोचिता ।
पूजा सिद्धिकरी ज्ञेया दृष्टादृष्टफलप्रदा ॥ १ ॥
तया स्युर्देवतास्तुष्टाः पुरुषार्थफलप्रदाः ।
पूजा सा त्रिविधा ज्ञेया श्रेष्ठमध्याधमक्रमात् ॥ २ ॥
पूजोत्तमा भवति षोडशधोपचारैर्या मध्यमा प्रभवतीह दशोपचारा ।
पञ्चोपचारविधिना त्वधमा सपर्येत्यासां यथाविभवमर्चनमाश्रयीत ॥ ३ ॥
कल्पतन्त्रगुरुप्रोक्ता यस्य मन्त्रस्य यादृशी ।
पूजा श्रेष्ठादिभेदेन तयाराध्यैष साधयेत् ॥ ४ ॥
आसनावाहनार्घ्यादि[1] पाद्यमाचमनीयकम् ।
साङ्गोपाङ्गं तथा स्नानं वसनाभरणानि च ॥ ५ ॥
गन्धः पुष्पं तथा धूपो दीपश्चरुनिवेदनम् ।
अग्निकार्यं नमस्कारो जपपूजासमर्पणम् ॥ ६ ॥
इति षोडशधोद्दिष्टा ह्युपचाराः समासतः ।
अर्घ्यं पाद्यं तथाचामः स्नानं गन्धश्च पुष्पकम् ॥ ७ ॥
धूपदीपनिवेद्यानि नमस्कारश्च ते दश ।
मध्यमायां तु पूजायामुपचाराः प्रकीर्तिताः ॥ ८ ॥
गन्धः पुष्पं धूपदीपौ निवेद्यं पञ्चैवं स्युस्तूपचाराः कनिष्ठे ।
अप्येतेषां लक्षणानां प्रभेदाः संलिख्यन्ते साधकानां हिताय ॥ ९ ॥
शक्त्यादिस्वाङ्गशक्त्यन्तं पीठाब्जं वाब्जमेव वा ।
यत् तन्मन्त्रविधानोक्तमासनं तत् प्रचक्षते ॥ १० ॥
आधारो वेत्यासनं देवतायाः स्वासीनास्मिन् पूज्यते देवतेष्टा ।
धातोरासेत्यस्य चैवोपवेशः सिद्धं तस्मादासनं प्राक् प्रशस्तम् ॥ ११ ॥

---

1. 'णि' ख. पाठः.

व्योमाम्बुजादथो बिन्दोर्हृदयाद्वार्कमण्डलात् ।
यत् तत्त्वमानयीतास्मिन् तदावाहनसंज्ञितम् ॥ १२ ॥
स्वत एवाभिपूर्णस्य तत्त्वस्येहार्चनादिषु ।
सादरं संमुखीभावस्तदावाहनमिष्यते ॥ १३ ॥
पुष्पैरञ्जलिमापूर्य हृदयादिस्थितं विभुम् ।
सौषुम्नमार्गेणादाय बिन्दोरभ्युदितं स्मरन् ॥ १४ ॥
तावदुच्चारयेन्मन्त्रं यावन्निष्कलगोचरम् ।
तस्मादादाय विस्रब्धः स्थिरधीः पुरतः स्थिते ॥ १५ ॥
बिम्बे वा स्थण्डिले वापि न्यसेदावाहनं तु तत् ।
आवाहनाङ्गभूतानि स्थापनं सन्निधापनम् ॥ १६ ॥
संन्निरोधामृतीकाराववकुण्ठनमेव च ।
साकारस्येष्टदेवस्य पूजार्थं कल्पितासने ॥ १७ ॥
उपवेशनमुद्दिष्टं स्थापनं नाम भक्तितः ।
आकर्मकाण्डपर्यन्तं सान्निध्यं दैवतस्य तु ॥ १८ ॥
अविच्छेदेन पूजायां सन्निरोधः स कथ्यते ।
अविभिन्नस्वभावानां यदभिन्नं प्रयोजनम् ॥ १९ ॥
अङ्गानामङ्गिना सार्धममृतीकरणं हि तत् ।
आनन्दायतनं तत्त्वं सच्चिदानन्दविग्रहम् ॥ २० ॥
तदेतन्मूर्तगं ध्येयं यत् तत् स्यादवकुण्ठनम् ।
अवकुण्ठनवत् तेजो रुचिराङ्गप्रवर्धनम् ॥ २१ ॥
लावण्यामृतपूराढ्यं यत्तदुक्तं प्ररोचनम् ।
पूजां प्रयुज्यमानां तु गृहीत्वानुग्रहादिकम् ॥ २२ ॥
कर्तुं सामर्थ्यमस्यास्ति यत् तत् स्यात् संनिधापनम् ।

आसनावाहनाधिकारः ।

---

१. 'ह्य' ख. पाठः.

अर्घ्यं नामार्हणं प्रोक्तं तदर्हायागताय यत् ॥ २३ ॥

कल्पितं दीयते तत् तद्विधानादर्चनादिषु ।
तच्चास्य त्रिविधं ज्ञेयं शैवं शाक्तं च वैष्णवम् ॥ २४ ॥

शैवमर्घ्यं षडङ्गं चाप्यष्टाङ्गं च द्विधा भवेत् ।
गन्धपुष्पाक्षतकुशा दूर्वाग्रं च तथोदकम् ॥ २५ ॥

भोजेन्द्रब्रह्मशम्भूक्तं षडङ्गार्घ्यमुदाहृतम् ।
कुशाक्षततिला दूर्वा गन्धः पुष्पं यवास्तथा ॥ २६ ॥

क्षीरं चाष्टाङ्गमर्घ्याम्भः शैवं स्याद् विजयोदितम् ।
गन्धपुष्पाक्षतयवाः कुशदूर्वाग्रसर्षपाः ॥ २७ ॥

आपश्चेत्यष्टभिर्द्रव्यैः शाक्तमर्घ्यमुदीरितम् ।
सिद्धार्थाक्षतदर्भाग्रगन्धपुष्पयवाः फलम् ॥ २८ ॥

तिलाश्चेत्यष्टभिर्युक्तमम्भोऽर्घ्यं वैष्णवं स्मृतम् ।
हैरण्यं राजतं ताम्रमलाभे वाथ दारवम् ॥ २९ ॥

पात्रं त्रिकुडुबैः पूर्णमर्घ्ये शङ्खस्तु वा भवेत् ।
आपूर्यार्घ्यं तु मूलाङ्गैरभिमन्त्र्यामृतीकृतम् ॥ ३० ॥

ध्यात्वा तु सकलोपाधिविग्रहं संमुखं विभुम् ।
परमामृतनिःष्यन्दधवलीकृतदिङ्मुखम् ॥ ३१ ॥

समुत्क्षिप्य विशेषार्घ्यभाजनं वामपाणिना ।
पश्चान्निवेदयेदर्घ्यं दक्षिणेन करेण तु ॥ ३२ ॥

अर्घ्यविधिः ।

---

पाद्यं तु सर्वसामान्यं दूर्वाश्यामाकपङ्कजैः ।
लक्ष्म्याम्भसा समापूर्य पाद्यं दद्यात् तु पादयोः ॥ ३३ ॥

सजातीफलतक्कोललवङ्गं शीतलं जलम् ।
प्रपञ्चादिषु यत् प्रोक्तं सामान्याचमनीयकम् ॥ ३४ ॥

दधिमध्वाज्यदुग्धाम्भांस्येकीकृत्य विधाय तु ।
सहेमं कांस्यपात्रेण कूर्चाभ्यां परिगृह्य च ॥ ३५ ॥
मधुपर्कं तु तद् दद्यात् सामान्यं तच्च मन्त्रतः ।
"न नित्ययजनेष्विष्टं मधुपर्कनिवेदनम् ।
नैमित्तिकेषु तच्छस्तं प्रतिष्ठास्नपनादिषु ॥"

इति पौष्करे ।

पुनराचमनीये च शस्तमम्भः सुगन्धि च ॥ ३६ ॥
नमः स्वधा तथा स्वाहा वषड्जातियुजा हृदा ।
अर्घ्यादिकचतुष्कं तु दद्यादेवं यथाक्रमम् ॥ ३७ ॥
अर्घ्यस्य त्रीणि पात्राणि पाद्यस्यापि त्रयं भवेत् ।
षडाचमनपात्राणि तथैकं मधुपर्कके ॥ ३८ ॥
अर्घ्यमादौ तथा स्नाने पूजान्ते च प्रदीयते ।
आदौ स्नाने विभूषान्ते पाद्यं कालेषु वै त्रिषु ॥ ३९ ॥
पाद्यान्ते मधुपर्कान्ते स्नानाद्यन्ताम्बरादिषु ।
निवेद्यान्ते च षट्स्वेषु दद्यादाचमनीयकम् ॥ ४० ॥
धूपे दीपे च नैवेद्ये ताम्बूलं वा फलादिकम् ।
निवेद्याचमनं दत्त्वा कर्तव्यं कर्म चोत्तरम् ॥ ४१ ॥
प्रथमाचमनीयान्ते मधुपर्कं प्रदाय तु ।
सकृदाचमनं दत्त्वा ततो गन्धादिनार्चयेत् ॥ ४२ ॥

पाद्याचमनमधुपर्काधिकारः ।

---

अपनीय तु निर्माल्यं गन्धपुष्पादिनार्चयेत् ।
मूर्ध्नि दूर्वाक्षतान् दत्त्वा ततः स्नानं समारभेत् ॥ ४३ ॥
नि(र्मत्स ? मज्ज)नं तु देवस्य प्रथमं कारयेत् ततः ।
सुगन्धतैलेनाभ्यज्य तथा तैलापनुत्तये ॥ ४४ ॥
यवगोधूममाषादिचूर्णैरुद्वर्तयेदपि ।
ईषदुष्णाम्बुशीताद्भिः सेकाल्लेपापनोदनम् ॥ ४५ ॥

---

१. 'मात्' ग. पाठः.

समूलाङ्गमनोन्यासः पुष्पधूपसमर्पणम् ।
फलापूपादिनैवेद्यं गीतवाद्यादिमङ्गलम् ॥ ४६ ॥
पञ्चगव्यामृतस्नानं पुनर्लेपापनोदनम् ।
गन्धामलकहारिद्रकुङ्कुमोद्वर्तनानि च ॥ ४७ ॥
मूलाङ्गवैदिकैर्मन्त्रैः सुगन्धाम्भोभिषेचनम् ।
यथोपपत्तिकलशैरभिषेकश्च संभवेत् ॥ ४८ ॥
माङ्गल्यपिष्टदीपाद्यैर्नीराजनविधिस्तथा ।
विशुद्धवाससा बिम्बस्थिततोयापमार्जनम् ॥ ४९ ॥
हेमपुष्पादिना शश्वदशून्यं मस्तकं यथा ।
इत्थं हि विंशत्यङ्गं तु स्नानं सामान्यमीरितम् ॥ ५० ॥
एतेषां यदलभ्यं स्यान्मनसा तत् प्रकल्पयेत् ।

**स्नानाधिकारः ।**

---

ततो वासांसि शुद्धानि सूक्ष्माण्यभिनवानि तु ॥ ५१ ॥
दुकूलपट्टकार्पासदेवाङ्गादीनि यानि ह ।
अन्यत्रानुपयुक्तानि विकेशान्यहतानि च ॥ ५२ ॥
भक्त्या यथोपपन्नानि शस्तान्यत्र प्रदापयेत् ।
भूषणानि च हैमानि नानारत्नोज्ज्वलानि तु ॥ ५३ ॥
पादाद्याकेशयोग्यानि यथाविभवसारतः ।
अलाभे मनसा वापि तं तु सम्यग् विभूषयेत् ॥ ५४ ॥
दर्पणं निर्मलं चात्र स्थापयेत् पुरतः प्रभोः ।

**वस्त्रभूषणविधिः ।**

---

गन्धश्च त्रिविधो ज्ञेयः शैवः शाक्तश्च वैष्णवः ॥ ५५ ॥
चन्दनं कुङ्कुमं कुष्ठं दलोशीरं तथागरु ।
कर्पूरं हिरिबेरं च शैवं गन्धं प्रचक्षते ॥ ५६ ॥
चन्दनागरुकर्पूरमांसीकुङ्कुमरोचनाः ।
कच्चोरवानराभ्यां च शाक्तो गन्ध उदाहृतः ॥ ५७ ॥

चन्दनोशीरतोयाह्वमांसीकुष्ठं मुरागरू ।
कुङ्कुमं चेति वै गन्धमष्टाङ्गं वैष्णवं विदुः ॥ ५८ ॥

पुष्पाणि चैव कथ्यन्ते प्राग्वच्छैवादिभेदतः ।
तान्याग्नेयानि सौम्यानि सौम्याग्नेयानि च त्रिधा ॥ ५९ ॥

सात्त्विकानीह शुक्लानि राजसान्यरुणानि तु ।
कृष्णानि तामसानि स्युः पीतं राजससात्त्विकम् ॥ ६० ॥

श्यामं तमोरजोमिश्रं पत्रेष्वप्येवमेव हि ।
सात्त्विकाद्यैस्तु कुसुमैः फलं स्यात् सात्त्विकादिकम् ॥ ६१ ॥

श्वेतार्कं करवीरकं च कमलं दुर्धूरकारग्वधे
राजार्कं च सिताम्बुजं च तुलसीसाशोकसच्चम्पकैः ।
कल्हारं बकपाटले वकुलकं द्वे मल्लिके मालती-
पालाशस्थलपद्मदर्भदम(ने ? नै)र्मार्गच्छदं दूर्वया ॥ ६२ ॥

तद्वद् ग्रन्थिशमीबृहन्मरुवकैः पुन्नागनागासनै-
र्नन्द्यावर्ततमालकुब्जविजयामन्दारकाश्मीरकैः ।
शस्तान्युत्पलकर्णिकारकुसुमैः कादम्बबैल्वान्यथो
नीलं चोत्पलमित्यमूनि कुसुमान्युक्तानि शैवान्यलम् ॥ ६३ ॥

शैस्ते द्वे तुलसी सिताम्बुजमथो रक्ताब्जपालाशके
जातीकुब्जकमाधवीदमनकैः पुन्नागनागासनैः ।
नन्द्यावर्तशमीस्थलाब्जविजयासन्मल्लिकाचम्पकै-
र्बिल्वं चोत्पलकेतकाद्यभिनवं कुन्दं तथा पाटलम् ॥ ६४ ॥

लक्ष्मीदेविसहाः सभृङ्गमुसलीभीतेन्द्रवल्ल्यस्तथा
भद्रा श्रीपतिलङ्घिता च दशमी दूर्वाथ जम्बूच्छदम् ।
कह्लारं करवीरमेकदलकं पद्मं कुशाः कैरवं
रक्तं चेति विलोमतोऽधिकफलं पुष्पं भवेद् वैष्णवम् ॥ ६५ ॥

अम्भोजोत्पलबन्धुजीवविजयाः पुन्नागनागान्यथो
जातीकुन्दकरण्डचम्पकजपायूथीरमापाटलैः ।

---

१. 'तै', २. 'शर्के द्वे', ३. 'द्य' ग. पाठः.

बिल्वाशोकहयारिकुब्जदमनैर्मन्दारदूर्वादलै-
नन्द्याह्वाप्यपराजितेति कुसुमान्युक्तानि शाक्तान्यलम् ॥ ६६ ॥
निर्गन्धानि तथोग्रगन्धकटुकान्यस्पृश्यदुष्टानि चा-
प्यन्यायोपहृतानि वा नखकृमीचिह्नानि तुन्नानि वा ।
ऊर्णासूत्रशिरोरुहाद्युपगतैर्म्लायत्पुराणानि वा
कालातीतविलङ्घितानि च तथा पुष्पाण्यथो वर्जयेत् ॥ ६७ ॥
त्रेधा चोदितपुष्पजातिषु न चेदुक्तानि वर्ज्यानि तान्य-
न्योन्यप्रतिषेधदर्शनमपि स्याद् यत्र चोक्तं विना ।
अन्यस्मै परिकल्पितानि च तथा वर्ज्यानि तद् युक्तितो
यद्यस्यात्र विशेषतस्तु विहितं तद्दैवतं तोषयेत् ॥ ६८ ॥
सूर्याग्न्योस्त्रिविधैस्तथैव कुसुमैरिष्टं हि विघ्नेशितुः
शाक्तान्यप्यथ शाम्भवानि च तथा स्कन्दार्यचण्डादिषु ।
शाक्तान्येव मनोजवाग्गिरिसुतादुर्गाष्टमातृप्रिया-
ण्यम्भोजासनदेवराजकमलाः पूज्यास्तथा वैष्णवैः ॥ ६९ ॥
नन्द्यावर्तैरर्धरात्रे च काल्ये प्राग् रात्रेः स्यान्मालतीमल्लिकाभिः ।
अह्न्येवाब्जैरुत्पलैः सर्वदा वा हैमैः प्रातः केसरैरर्धरात्रे ॥ ७० ॥
आ वैवर्ण्यात् केसराणां सरोजं बैल्वं पत्रं दामनं च त्रिरात्रम् ।
पूजायोग्यं कर्णिकारं तु पक्षं न स्याज्जीर्णं मासषट्कं बकाख्यम् ॥ ७१ ॥

पुष्पाधिकारः ।

---

धूपद्रव्येषु सर्वेषु श्रेष्ठः कृष्णागरुर्भवेत् ।
कर्पूरमधिकश्रेष्ठमगरूपहितं तथा ॥ ७२ ॥
गुग्गुलुश्च तथोशीरचन्दने मध्यमे स्मृते ।
श्रीवाससर्जावधमौ तद्वल्लाक्षा घृतं मधु ॥ ७३ ॥
सर्वैरेतैः सितोपेतैर्धूप उक्तो दशाङ्गिकः ।
निर्धूमस्फुरदङ्गारे निर्ज्वाले च निरिन्धने ॥ ७४ ।

---

१. 'श', २. 'कृमिच्छन्नानि' ग. पाठः. ३. 'म्ला' ख. पाठः. ४. 'स्यात्तु वि' ग. पाठः. ५. 'द्वल्लक्षाघृ' ख. पाठः.

धूपं दद्यादधः किञ्चिद् घण्टां वामेन वादयेत् ।
विशुद्धसितसूत्रेण स्युर्वर्त्यो वाथ तूलजाः ॥ ७५ ॥
दीपार्थं गोघृतं मुख्यं मध्यान्त्ये[1] तैलमाहिषे ।
सकर्पूरदशो दीपः फलं दद्याच्छताधिकम् ॥ ७६ ॥
दीपः केवलकर्पूरः सहस्रगुण उच्यते ।
प्रभूतस्नेहसंपूर्णैर्दशभिर्वा नवाष्टकैः ॥ ७७ ॥
दीपैः प्रतिनवैराराद् भ्राम्यमारात्रिकं भवेत् ।
न दग्धशेषवर्त्या तु पुनर्दीपं प्रवर्तयेत् ॥ ७८ ॥
नोच्छिष्टाशुचितैलाद्यैर्नान्यतैलघृतादिना ।

धूपदीपविधिः ।

व्रीहेः पञ्चशतं तलं द्विगुणितं ते द्वे प्रकुञ्चं[2] स्मृतं
ते द्वेऽथ प्रसरं तथैव कुडुबं प्रस्थार्धकं[3] तद्द्वयम् ।
प्रस्थं पात्रमथाढकं शिवमथो द्रोणं च खारिः क्रमात्
खारीणां त्रितयं हि भार उदितो मानं यथाशास्त्रतः ॥ ७९ ॥

नित्यं नैमित्तिकं चेति नैवेद्यं द्विविधं मतम् ।
तच्चोत्तमोत्तमाद्यं तु नवभेदेन वक्ष्यते ॥ ८० ॥
तण्डुलाः शालिजाः शस्ताः कलमा राजशालिजाः ।
नीवारजास्त्वथो मध्या व्रीहिजा वैणवास्तथा ॥ ८१ ॥
प्रियङ्गुयवगोधूमश्यामाकास्त्वधमाः क्रमात् ।
तण्डुलेभ्योऽष्टमांशाः स्युरुपदंशास्तथा दधि ॥ ८२ ॥
द्वात्रिंशदंशमाज्यं स्याच्छर्करामधुनी तथा ।
तत्र नित्यविधेरष्टद्रोणशालिजतण्डुलैः ॥ ८३ ॥
सार्धरात्रं चतुष्कालं पूजायां विनिवेदयेत् ।
पायसं कृसरं गौलमन्नं तच्च चतुर्विधम् ॥ ८४ ॥
यथोचितोपदंशाज्यदध्यपूपरसोत्तरम् ।
सगीतनृत्तवादित्रं सभूतबलिमङ्गलम् ॥ ८५ ॥

---

१. 'न्ते' ख. पाठः. २. 'ञ्जं' ग. पाठः. ३. 'र्धं' ख. पाठः.

तत्र पञ्चशतं दीपास्त्वेवं स्यादुत्तमोत्तमम् ।
षड्भिर्द्रोणैश्चतुष्कालमभ्यर्च्य विनिवेदयेत् ॥ ८६ ॥

सहोमं द्विशतं दीपाः स्युर्गीतबलिनर्तनैः ।
कुर्यात् पूर्वानुसारेण तत् स्यादुत्तममध्यमम् ॥ ८७ ॥

पञ्चद्रोणैश्चतुष्कालं निवेद्यं पूजनं तथा ।
अष्टोत्तरशतं दीपैर्गीतवाद्यबलिक्रियाः ॥ ८८ ॥

अग्निकार्यं च कुर्वीत स्यादेवं तूत्तमाधमम् ।
सचतुर्द्रोणनैवेद्यं चतुष्कालोचितार्चनम् ॥ ८९ ॥

गीताद्यं बलिहोमौ च प्रदीपाः स्युश्च सप्ततिः ।
मध्यमोत्तममेवं स्यान्मध्यमध्यमथोच्यते ॥ ९० ॥

भारार्धतण्डुलैः प्राग्वन्नैवेद्यं चार्चनादिकम् ।
मध्याह्न एव होमः स्याद् द्विकालं नर्तनादिकम् ॥ ९१ ॥

चत्वारिंशत् प्रदीपाः स्युर्मध्यमध्ये बलिस्तथा ।
खारितण्डुलनैवेद्यं चतुष्कालार्चना बलिः ॥ ९२ ॥

होमो द्वादश दीपाः स्युर्गीताद्यं मध्यमाधमम् ।

सायंप्रातस्त्वाढकाभ्यां शिवं तन्मध्याह्ने स्यादह्नि वेदप्रदीपाः ।
रात्रावष्टौ स्युस्त्रिकालं च पूजा पञ्चातोद्यैः स्यात् कनिष्ठोत्तमाख्ये ॥ ९३ ॥

प्रातः पात्रं सायमप्यत्र पात्रं स्यान्मध्याह्ने त्वाढकं चाह्नि दीपौ ।
चत्वारो वै रात्रिदीपास्त्रिकालं पूजेत्युक्तं मध्यमं यत् कनिष्ठे ॥ ९४ ॥

सायंप्रातः प्रतिप्रस्थद्वयनैवेद्यमर्चनम् ॥ ९५ ॥
दीपोऽह्नि निशि दीपाविस्युक्तं स्यादधमाधमम् ।

नित्यनैवेद्यप्रकरणम् ।

---

अष्टद्रोणं समारभ्य यावद् द्वादशभारकम् ॥ ९६ ॥

नैमित्तिकं स्यान्नैवेद्यं नवधात्रापि पूर्ववत् ।
उत्तमोत्तमपूर्वं तु पूजां चैवं समूहयेत् ॥ ९७ ॥

स्यात् काम्यमपि नैवेद्यं यावद् वा प्रार्थितं भवेत् ।
न कालनियमस्तत्र साङ्गं पूजा प्रशस्यते ॥ ९८ ॥

नैमित्तिककाम्यविधिः ।

---

क्षीरं त्रिभागं भागस्तु तण्डुलाः पायसस्य तु ।
क्षीराज्यतण्डुलतिलाः समाः स्युः कृसरान्नके ॥ ९९ ॥

भिन्नमुद्गैः शुभास्तण्डुलाः स्युः समास्तस्य चार्धं घृतं स्याद् घृतार्धं गुलम् ।
तण्डुलेभ्यस्तथा गोपयः षड्गुणं स्याद् गुलान्नं तु तद् युक्तरम्भाफलम् ॥

धौतदन्ता द्विजाः स्नातशुक्लाम्बरा वस्त्रपूतैर्जलैर्मौनिनस्तण्डुलान् ।
क्षालयेयुस्तथा सप्तकृत्वोऽङ्गकैर्ज्वालयेयुस्तथाग्निं पवित्रादिना ॥ १०१ ॥

ध्यात्वा चुल्लिं शक्तिमग्निं च रुद्रं वह्नेर्बीजात् तारकाद् वाभिपूज्य ।
तस्मिन्नग्नौ तद्धविः साधयेयुरोङ्काराज्यं चाभिघार्याहरेयुः ॥ १०२ ॥

बृहत्यः कदल्यस्तथा कुण्डहाल्यः सकूश्माण्डमुक्तं भवेत् कर्करी च ।
तथा कारवेल्लं च चूतार्द्रकाख्यै बृहन्मुद्गमुद्गास्तथा नालिकेरम् ॥ १०३ ॥

सशिम्बाश्च माषास्तथा चिञ्चटाख्यः कुलस्थाश्च शस्ताः प्रकृष्टोपदंशाः ।
कदल्यादिपक्कैः सिताप्योषलोणैर्युतः स्याद् यवानीदधिक्काथसूपः ॥ १०४ ॥

तथा मोदकांश्चोपदंशांश्च कुर्याद् घृतव्योषलोणैर्यवानीष्टपिष्टैः ।
ततः पात्रवर्गं बहिः शोधयित्वा सशङ्खध्वजच्छत्रमुत्थापयेच्च ॥ १०५ ॥

हिरण्याद्यमन्त्रं हृदा धौतमद्भिः कदल्यादिपत्राणि वात्राभिघार्य ।
हविस्तत्र दत्त्वा युतं चोपदंशैः कदल्यादिपक्कैः फलैर्मोदकैश्च ॥ १०६ ॥

सिताक्षौद्रदुग्धेऽथ दध्ना तु गव्यं घृतं चारुगन्धं नवं रागभागम् ।
निवेद्यात् प्रदेयं तु पुष्पार्पितेऽस्मिंस्ततो धेनुमुद्रामृतैः प्लावयित्वा ॥१०७॥

सम्प्रोक्ष्य मूलमन्त्रेण दत्त्वाम्भोऽग्निप्रियान्तिकम् ।
सपुष्पदक्षिणकरो हविः स्पृष्ट्वा निवेदयेत् ॥ १०८ ॥

ध्यायेत् तन्मनसा दिव्यमन्नाज्यं तृप्तिकारकम् ।
पानीयं च निवेद्यास्मै हृद्यं शीतं सुगन्धि च ॥ १०९ ॥

बहिर्निर्गत्य तच्छेषमन्नं हुत्वानलेऽपि च ।
मूलाङ्गादिविधानेन तत्तन्मन्त्रेण साधकः ॥ ११० ॥
तत्र किञ्चिद् बलिं दत्त्वा वह्निं भक्त्या क्षमापयेत् ।
प्रदक्षिणनमस्कारस्तुतिभिः संप्रसादयेत् ॥ १११ ॥
प्रक्षाल्य चरणौ सम्यगाचान्तोऽन्तः प्रविश्य तु ।
सुतृप्तं दैवतं स्मृत्वा दद्यादाचमनीयकम् ॥ ११२ ॥
ततो लवङ्गकर्पूरतक्कोलक्रमुकान्वितम् ।
निवेदयेच्च ताम्बूलं गन्धपुष्पार्चितं ततः ॥ ११३ ॥
धूपयित्वा नमस्कृत्य जपेन्मूलं तु शक्तितः ।

## नैवेद्याधिकारः ।

---

अङ्गानि चैव परिवारगणांश्च सर्वान् पञ्चोपचारविधिना तु यथोपपत्त्या ।
संपूजयेदनुपपन्नमिहार्चनेयं तत्कल्पयेच्च मनसैव समाहितात्मा ॥ ११४ ॥
अत्रोपचारभेदेन पूजाभेदांस्तथापरे ॥ ११५ ॥
वदन्ति तांश्च वक्ष्यामः किञ्चिद्भेदात् पुरोदितात् ।
दशोपचाराः कथिता निवेद्यान्ते तु पूजने ॥ ११६ ॥
होमान्तके तु कथिता ह्युपचारास्तु षोडश ।
बल्यन्ते चापि ते ख्याताः पञ्चविंशतिसंख्यया ॥ ११७ ॥
नृत्तान्ते चापि षट्त्रिंशदुपचाराः प्रकीर्तिताः ।
उत्तमोत्तमपूजायामुत्तमे वा भवन्त्युत ॥ ११८ ॥
आसनावाहनार्घ्याणि पाद्यमाचमनीयकम् ।
साङ्गं स्नानं तथा वस्त्रमुपवीतं च भूषणम् ॥ ११९ ॥
अञ्जनं गन्धपुष्पे च धूपो दीपश्च दर्पणम् ।
नीराजनं च नैवेद्यमग्निकार्यं प्रदक्षिणम् ॥ १२० ॥
नमस्कारः स्तुतिर्वाद्यगीते नित्यबलिस्तथा ।
पूजासमर्पणं चेति पञ्चविंशतिचोदिता ॥ १२१ ॥

---

१. 'स्तं' ग. पाठः.

अथासनादयः पञ्च पञ्चगव्याभिषेचनम् ।
दुग्धेन दध्ना चाज्येन मधुनक्षुरसेन च ॥ १२२ ॥

अभिषेकस्तु तत्स्नानं चक्रवर्त्युपचारतः ।
वस्त्रोपवीताभरणान्यञ्जनं गन्धपुष्पके ॥ १२३ ॥

धूपदीपौ च मुकुरं नीराजनविधिस्ततः ।
मुद्राणां दर्शनं तद्वन्नैवेद्यं पुस्तकार्चनम् ॥ १२४ ॥

होमकर्म च ताम्बूलं पादुके चामरध्वजौ ।
छत्रं च नित्ययात्रा च बलिदानमतः परम् ॥ १२५ ॥

प्रदक्षिणनमस्कारस्तोत्राण्यातोद्यमेव च ।
गीतं नृत्तं च पूजादेः समर्पणमतः परम् ॥ १२६ ॥

षट्त्रिंशदुपचाराः स्युरेवमुक्ताः क्रमात् क्वचित् ।
व्यत्यस्तक्रमतो वा स्युस्तत्तत्तन्त्रोदितास्त्वमी ॥ १२७ ॥

त्रिविधोपचाराधिकारः ।

---

बलियात्रोत्सवाः शस्ताः स्थिरलिङ्गादिपूजने ।
न चलस्थण्डिलविधौ मण्डलक्षणिकादिषु ॥ १२८ ॥

इति निगदितमार्गास्तूपचाराः प्रदिष्टाः
पृथगिह परिपाट्या तन्त्रभेदेषु दृष्टाः ।
विविधमनुसुराणां ये च सामान्यकल्पाः
स्वभिमतफलसिद्धिः साधकानां यथा स्यात् ॥ १२९ ॥

इति श्रीमदीशानगुरुदेवपद्धतौ तन्त्रसारे

उपचारपटलोऽष्टमः ।

---

अथ नवमः पटलः ।

अथोच्यते नैत्यकमत्र कर्म सामान्यतः सिद्धिकरं मनूनाम् ।
समस्तवर्णाश्रमलिङ्गभाजामावश्यकं यत् करणीयमेकम् ॥ १ ॥

प्रभावतीष्वेव हि तारकासु कालं तु सूर्योदयदर्शनात् प्राक् ।
वदन्ति सन्ध्यां मुनयः प्रभातां तस्यां विनिद्रः शयनं च जह्यात् ॥ २ ॥

अत्र पितामहः —

"नक्षत्रज्योतिरारभ्य आ सूर्योदयदर्शनात् ।
प्रातःसन्ध्येति तां प्राहुर्मुनयो वेदपारगाः ॥" इति ।

स्मरन् हृदम्भोरुहकोटरस्थं शैवं परं ज्योतिरथात्मसंज्ञम् ।
व्रजेत् समुत्थाय दिशं विशुद्धामम्भः प्रभूतं सुलभं च यस्याम् ॥ ३ ॥

अत्र स्मृतिः —

"निवीतं दक्षिणे कर्णे समासज्याम्बरेण तु ।
अवकुण्ठ्य शिरो मौनी मलोत्सर्गमथाचरेत् ॥" इति ।

विदूरतो मार्गजलाशयादेश्छन्ने तृणैर्भूमितले निवीती ।
उदङ्मुखो याम्यमुखोऽह्नि रात्रौ त्यक्त्वा मलं चाथ गृहीतशिश्नः ॥ ४ ॥

जलान्तिकं प्राप्य मृदं विशुद्धामादय चाष्टाङ्गुलखातलब्धाम् ।
निधाय तां दक्षिणतो धृताभिरद्भिस्तु शौचं विधिवत् प्रकुर्यात् ॥ ५ ॥

एकैव लिङ्गे करयोस्तु तिस्रस्तथा गुदे पञ्च मृदः प्रयोज्याः ।
वामे करे सप्त दशैव पाण्योः कनिष्ठकल्पं खलु शौचमेतत् ॥ ६ ॥

द्वे चापि लिङ्गे करयोश्चतस्रो गुदे दश स्युर्दश वामपाणौ ।
हस्तद्वये द्वादश चेति मृत्स्नाः शौचेष्वयं मध्यविधिः प्रदिष्टः ॥ ७ ॥

तिस्रोऽथ लिङ्गे करयोश्च पञ्च त्रिपञ्चसंख्यास्तु गुदे मृदः स्युः ।
वामे करे द्वादश तत्प्रसंख्याः पाण्योरयं शौचविधिर्हि मुख्यः ॥ ८ ॥

उत्थाय वासः परिधाय सम्यगाजानुसन्धेश्चरणौ करौ च ।
प्रक्षाल्य मृत्स्नासलिलैर्विशुद्धैर्वक्त्रं च गण्डूषजलैर्विशोध्य ॥ ९ ॥

प्लक्षाम्रजम्बूककुभाश्वकर्णमालूरकाशोकलवङ्गजाद्यम् ।
वैकङ्कतोदुम्बरचम्पकं वा शस्तं बुभुक्षोः खलु दन्तकाष्ठम् ॥ १० ॥

स्वैरङ्गुलैर्द्वादशभिर्मितं तत्कनिष्ठिकानाहसमं सवल्कम् ।
पूर्वामुखोऽथादुपविश्य मौनी प्रदक्षिणं वामरदादधः प्राक् ॥ ११ ॥

मोक्षार्थिनां कण्टकिनस्तु शस्तास्तद्वच्छिरीषार्जुननक्तमालः ।
शस्तो ह्यपामार्ग इतीह तेषामष्टाङ्गुलं दन्तविशोधनं तत् ॥ १२ ॥

---

• 'पाम्यग.म' क पाठः

सनिम्बधात्रीधवशेलुशिग्रुवानीरकैरण्डतृणैः कुशैर्वा ।
स्थितः प्रजल्पन् शयितोऽथवाघ्रात् तैलावसिक्तोऽपि न दन्तकाष्ठम् ॥१३॥
नोपोषितः पारणपूर्वकालं न जन्मभे पर्वणि नासिताहे ।
नाप्यष्टमीश्राद्धदिनेषु दन्तान् प्रधावयेदङ्गुलिभिर्नखैर्वा ॥ १४ ॥

अपिच सार्धत्रिशतिकायामत्र कालोत्तरे—

"प्रतिपत्पर्वषष्ठीषु नवम्यामपि वा गुह! ।
दन्तानां काष्ठसंयोगे महान् दोषोऽभिधीयते ॥" इति ।

तद्वत् तु जिह्वामपि मार्जयित्वा तद्दन्तकाष्ठादि विसृज्य दूरे ।
गण्डूषकद्वादशकेन पश्चादाचम्य तु स्नानमुपक्रमेत ॥ १५ ॥
सरित्सु गङ्गादिषु मुख्यमुख्यं तीर्थेषु चान्यासु नदीषु मुख्यम् ।
सरस्तटाकादिषु मध्यमं स्यात् स्नानं तु कूपेषु गृहेषु नीचम् ॥ १६ ॥
स्नायात् तु कूपादिषु शुद्धपात्रैः स्नातैर्द्विजैरेव समाहृताद्भिः ।
स्नायात् तु नोष्णाम्भसि कर्मयोग्यं नैतद् यतो रोगिषु सम्मतं तत् ॥ १७ ॥

भुवमष्टाङ्गुलां खात्वा त्यक्त्वाधो मृदमस्त्रतः ।
खातां मृदं समादाय तत् खातं परिपूर्य च ॥ १८ ॥
शिरसा पयसस्तीरे धौते संस्थाप्य तां पुनः ।
शिखया शोधयित्वा तु वर्मणा विभजेत् त्रिधा ॥ १९ ॥
लिप्त्वैकभागमा नाभेः प्रक्षाल्याचम्य वाग्यतः ।
द्वितीयेनास्त्रयुक्तेन दीप्तेनाङ्गानि लेपयेत् ॥ २० ॥
द्विजश्चेदुद्धृतासीति मन्त्रेण प्रार्थयेद् भुवम् ।
इतरो वक्ष्यमाणेन + + + + + + + + ॥ २१ ॥
"धारणं पोषणं त्वत्तो भूतानां देवि! सर्वदा! ॥
तेन सत्येन मां पापं पापान्मोचय धारिणि! ॥" इति ।
+ + + + + + + + ततोऽक्षाणि निरुध्य तु ।
प्राणानायम्य सलिले निमज्ज्यास्त्रमनुस्मरन् ॥ २२ ॥
कालानलप्रतीकाशमथोपतटमम्भसि ।
उपविष्टो ह्यनादिते सर्ये सन्ध्यां भजेद द्विजः ॥ २३ ॥

ब्राह्मीं पूर्वं ततोऽस्त्राख्यां मन्त्रसन्ध्यां तथेतरः ।
उपास्योर्ध्वं जलं क्षिप्त्वा विधिस्नानं समाचरेत् ॥ २४ ॥

स्वमन्त्रसन्नद्धतनुः स्मृत्वात्मानं हृदम्बुजे ।
तृतीयं पूर्वमृद्भागमादायानाभि वारिणि ॥ २५ ॥

स्थित्वा वामकरे कृत्वा त्रिधा तां विभजेत् पुनः ।
दक्षिणं भागमस्त्रेण[1] प्राक् स्वेमूलेन[2] तूत्तरम् ॥ २६ ॥

अङ्ग[3]मन्त्रेणाभिमन्त्र्य गृहीत्वास्त्रेण दक्षिणम् ।
हुंफडन्तेन रक्षायै दशदिक्षु क्षिपेत् सुधीः ॥ २७ ॥

मूलाभ्यस्तेन[4] पूर्वेण जले दक्षिणपाणिना ।
निक्षिप्य भ्रामयेद् वारि शिवतीर्थमनुस्मरन् ॥ २८ ॥

अङ्गाभ्यस्तार्कदीप्तेन शिष्टभागेन विग्रहम् ।
सर्वमालिप्य तत्तीर्थं स्वनाम्नावाह्य पूजयेत् ॥ २९ ॥

गन्धपुष्पैर्यथालाभं मनसा वा समाहितः ।
मुख्यनद्यब्धितीर्थेषु नान्यतीर्थानि कीर्तयेत् ॥ ३० ॥

कीर्तनान्निष्फलं तत् स्यात् क्रुध्येच्चातो न कीर्तयेत् ।
केवलाम्भस्सु गङ्गादितीर्थानां कीर्तनं स्मृतम् ॥ ३१ ॥

तत्तत्फलप्रदं तस्मात् तत्र तीर्थानि कीर्तयेत् ।
ततः प्राणान् समायम्य त्रिर्निमज्ज्य समाहितः ॥ ३२ ॥

निमग्न एव साङ्गं स्वं मूलं शक्त्या जपेद्धृदा ।

अपिच द्विजश्चेत् —

हिरण्यशृङ्गं वरुणं प्रपद्य इत्यथादितः सूक्तमुदीरयन् हृदा ।
निमग्न एवाम्भसि शक्तितोऽखिलान् हरत्यघौघानघमर्षणे स्थितः ॥ ३३ ॥

यथा जलौघे लवणस्य सञ्चयः प्रयाति सद्यो विलयं महानपि ।
तथा महानप्यघमर्षणेऽहसां चयोऽपि नाशं व्रजतीति निश्चयः ॥ ३४ ॥

---

१. 'ङ्गैः स्वैः प्रा', २. 'च मन्त्रेण तू'. ३. 'मूलम'. ४. 'क' क. पाठः.

ततः स्थितो वारिणि वामदक्षिणौ करौ शशाङ्कार्कशिवद्वयात्मकौ ।
विभाव्य मूलेन च कुम्भमुद्रया शिरस्यथाङ्गैरपि वाभिषेचयेत् ॥ ३५ ॥
द्विजस्तु सूक्तैः पवमानपूरुषश्रियां यथाशक्त्यभिषिच्य तज्जलात् ।
तटं गतः स्वे परिधाय वाससी विशुद्धशुक्ले क्षतिदोषवर्जिते ॥ ३६ ॥

स्नातो नाङ्गानि निर्मृज्यात् पाणिना वार्द्रवाससा ॥ ३७ ॥
तथा नेक्षेत पाषण्डपातकिश्वान्त्यजाशुचीन् ।
चितिं च चितिकाष्ठं च यूपं चण्डालमेव च ॥ ३८ ॥
स्पृष्ट्वा देवलकं चापि सचेलो जलमाविशेत् ।
नैमित्तिकेषु कृत्येषु ग्रहणेन्दुक्षयादिषु ॥ ३९ ॥
अयनद्वयतीर्थादौ सचेलः स्नातुमर्हति ।
सन्ध्यासु वमने शुक्रविण्मूत्रोच्छिष्टकुष्ठिनाम् ॥ ४० ॥
संपर्के वपने चाब्धेः स्पर्शने चाप्यपर्वणि ।
वृषलप्रतिलोमानां मार्जारस्पर्शनेऽपि च ॥ ४१ ॥
श्मश्रुकर्मणि चोत्तीर्य नदीं वारुणमाचरेत् ।
दानादौ स्नानजप्यादौ तर्पणे हवनेऽपि वा ॥ ४२ ॥
सर्वत्र सपवित्रः स्यादन्यथा स्यात् तदासुरम् ।
यद्वा मुक्तशिखो नग्नः प्रलपन् वावकुण्ठितः ॥ ४३ ॥
करोति कृत्यं दैवाद्यं सर्वं विद्यात् तदासुरम् ।
पादप्रक्षालने मृत् स्यात् सकृत् पाण्योश्च सर्वदा ॥ ४४ ॥
स्नानादिसर्वकृत्यादौ भोजनादौ च संविशेत् ।
मूत्रादिशौचस्यान्ते च हस्तपादौ प्रधावयेत् ॥ ४५ ॥
अथाचमनकल्पोऽत्र सामान्यस्मृतिचोदितः ।
कथ्यते वैदिकी सन्ध्या तथास्नाख्या च तान्त्रिकी ॥ ४६ ॥

अङ्गुल्यग्रे दैवमङ्गुष्ठमूले ब्राह्मं तीर्थं पर्वसन्धिष्वथार्षम् ।
प्राजापत्यं स्यात् कनिष्ठामथोऽथ पित्र्यं तर्जामूलदेशे द्विजानाम् ॥ ४७ ॥

हस्ते तूक्तं दक्षिणे तत्तले स्यादाग्नेयाख्यं तीर्थमन्यत्र सौम्यम् ।
दैवाद्यं यत् कर्म कुर्यात् स्वतीर्थादाचामेत् तु ब्रह्मतीर्थेन तोयैः ॥ ४८ ॥
ज्येष्ठाग्रेऽग्निस्तर्जनीमूर्ध्नि वायुर्मध्याग्रेऽर्कोऽनामिकाग्रे सुरेन्द्रः ।
प्रजापत्या स्यात् कनिष्ठेति देवैरङ्गुल्यः स्युर्दक्षिणे विप्रपाणौ ॥ ४९ ॥
प्राग्वक्त्रो वोदङ्मुखः सोपवीतो बद्ध्वा चूडां जानुमध्यस्थबाहुः ।
तोयोत्क्षेपी सूपविष्टोऽथ मौनी स्यादाप्रह्वस्त्वेकधीराचमिष्यन् ॥ ५० ॥

अदुष्टरसगन्धाद्यैरकीटाफेनबुद्बुदैः ।
अनुष्णैरम्बुभिः शुद्धैराचामेदभिवीक्षितैः ॥ ५१ ॥

हृत्कण्ठास्यगताः पुनन्ति विधिनैवापो द्विजातीन् क्रमात्
त्रिः पीता वृषलस्त्रियावपि तथा कुण्डानुलोमादिकान् ।
आचम्य त्रिरपस्त्रिवेदपुरुषान् प्रीणाति निर्मार्ष्टि यद्
द्विः साथर्वषडङ्गयज्ञपुरुषाः प्रीताः स्युरप्यग्नयः ॥ ५२ ॥
प्रीणात्यर्कमनामिकानयनयोः स्पर्शात् तथाङ्गुष्ठयुक्
साङ्गुष्ठा त्वथ तर्जनीसममिता घ्राणद्वये मारुतान् ।
अङ्गुष्ठेन कनिष्ठिकाश्रवणयोराशाश्च नाभेर्वसू-
नात्मानं तु हृदोंऽसयोर्दिवमृषीन् मूर्ध्नः समस्ताङ्गुलैः ॥ ५३ ॥

आचम्येत्थं द्विर्विशुध्येत सर्वेषूच्छिष्टेषु क्षालने पादयोश्च ।
कक्ष्यामोक्षे वा शिखाबन्धमोक्षे निष्ठीव्यार्थो जृम्भिकायां क्षुते च ॥ ५४ ॥

आत्मविद्याशिवैस्तत्त्वैरीश्वरायनमोन्तकैः ।
अपः पिबेत् त्रिरभ्यस्तास्तच्चैवाचमनं स्मृतम् ॥ ५५ ॥
ओष्ठावस्त्रेण संमृज्य खानि सर्वात्मना स्पृशेत् ।
एवं सन्ध्याप्रसङ्गेन वारुणस्नानमीरितम् ॥ ५६ ॥

वारुणस्नानाचमनाधिकारः ।

---

आग्नेयादीनि चान्यानि कुर्यात् स्नानानि संभवे ॥ ५७ ॥
आग्नेयं भस्मना स्नानं निखिलाघनिबर्हणम् ।
स्वतेजःसंभवेनैव येन स्नातः स्वयं शिवः ॥ ५८ ॥

स्नानं प्राग् वारुणं कृत्वा पश्चादाग्नेयमाचरेत् ।
आपद्यपि तथा शक्तौ देहस्याग्नेयमेव वा ॥ ५९ ॥

सन्ध्यात्रये च जप्यादौ चर्या पूर्वावसानयोः ।
भुक्त्वा सुप्त्वाम्बु पीत्वा वा कृत्वाप्यावश्यकादिकम् ॥ ६० ॥

स्त्रियं वाप्यनुलोमादीन् स्पृष्ट्वा वा मूषिकाशुचीन् ।
आचरेत् स्नानमाग्नेयं यथैवाथर्वचोदितम् ॥ ६१ ॥

देवाग्निगुरु(विद्या ? वृद्धा)नां समीपेऽन्त्यजदर्शने ।
अशुद्धभूमौ मार्गे वा स्थितो नोद्धूलयेद् बुधः ॥ ६२ ॥

कल्पानुकल्पोपकल्पभेदात् तद्वदकल्पकम् ।
चतुर्धा भस्म शैवोक्तं पूर्वं पूर्वं गुणाधिकम् ॥ ६३ ॥

अरोगायाः सवत्साया भूमावपतितं तु गोः ।
गोमयं पद्मपालाशपत्राद्यन्यतमेन तु ॥ ६४ ॥

गृहीत्वा तु विशुद्धात्मा गायत्र्या तु द्विजोऽपरः ।
साङ्गमूलेन शैवाग्नौ कल्पं तद्भस्म कीर्तितम् ॥ ६५ ॥

आरण्यगोमयं दूरे ग्रामादेः पूतमाहरेत् ।
प्राग्वच्छिवाग्निना दग्धं यत्तत् स्यादनुकल्पकम् ॥ ६६ ॥

अग्निदग्धेष्वरण्येषु गृहीत्वा भस्म तत् पुनः ।
गोमूत्राबद्धपिण्डं तु विशोध्याथ शिवानले ॥ ६७ ॥

दग्धं भस्मोपकल्पं स्यादकल्पकमथोच्यते ।
विशिष्टविप्रगोवाटजातं वा देवतालयात् ॥ ६८ ॥

गृहीत्वा साधितं प्राग्वत् तद् भस्म स्यादकल्पकम् ।
चतुर्विधं च तद् भस्म जातिसङ्करवर्जितम् ॥ ६९ ॥

अपरिग्रहमन्येषां कर्मस्पर्शाद्यदूषितम् ।
श्लक्ष्णं पूतमरोगं च पात्रस्थं भसितं सितम् ॥ ७० ॥

आग्नेयस्नानयोग्यं स्याद् यथोक्तं ब्रह्मशम्भुना ।
तद्भस्म शिवमन्त्रेण शक्त्याभ्यस्तं सुरक्षितम् ॥ ७१ ॥

आदाय हस्तेनाधाराद् दक्षिणेनाभिमन्त्र्य तु ।
विशोध्य धारणाभिस्तु भूतशुद्धिविधानतः ॥ ७२ ॥
षडङ्गेनाभिमन्त्र्यादौ कृत्वा वामकरे पुनः ।
कृत्वास्त्रेण मलस्नानं मस्तकप्रभृति क्रमात् ॥ ७३ ॥
ततस्त्वीशानपुरुषाघोरवामैः ससद्यकैः ।
क्रमान्मूर्धास्यहृद्गुह्यजङ्घान्ताशेषविग्रहम् ॥ ७४ ॥
उद्धूलयेद् द्विजोऽन्ये तु ललाटांसहृदादिषु ।
धारयेयुस्त्रिपुण्ड्राणि तथैव ब्राह्मणादयः ॥ ७५ ॥
त्रियायुषं धारयेयुर्वेदप्रामाण्यदर्शनात् ।

"त्रियायुषं जमदग्नेः कश्यपस्यागस्त्यस्य[1] त्रियायुषमृषीणां त्र्यायुषं यद् देवानां त्रियायुषं तन्मेऽस्तु त्रियायुषं शिवो नामासी"ति श्रुतेः ।

आग्नेयस्नानाधिकारः ।

---

अनभ्रे प्रतपत्यर्के वृष्टिं दृष्ट्वोर्ध्वबाहुना ॥ ७६ ॥
माहेन्द्रस्नानमीशानात् कार्यं सप्तपदावधि ।
गवां खुरपुटोत्खातरेणुभिः पवनोपगैः ॥ ७७ ॥
गोमध्यगस्तत्पुरुषं गोसूक्तं वा जपन् द्विजः ।
अन्यस्तु गोस्तुतिं गोभ्यो नमो वेत्यभ्युदीरयन् ॥ ७८ ॥
वायव्यमाचरेत् स्नानमखिलाघनिबर्हणम् ।
स्नानानामिह सर्वेषां मूलं श्रेष्ठं च वारुणम् ॥ ७९ ॥
तस्मात् प्राग् वारुणं कृत्वा ततः स्नानान्तरं व्रजेत् ।
आपोहिष्ठादिभिर्मन्त्रैर्मन्त्रस्नानं हि वैदिकम् ॥ ८० ॥
संप्रोक्षणविधानेन स्वाङ्गमूलैस्तु तान्त्रिकम् ।
इत्थमुत्थानकावश्यशौचदन्तविशोधनैः ॥ ८१ ॥
स्नानेन च विशुद्धस्य सन्ध्योपासनमिष्यते ।
द्विजः प्राग् वैदिकीं सन्ध्यामुपासीताथ तान्त्रिकीम् ॥ ८२ ॥

---

1. 'का' ग. पाठः.

क्षत्रवैश्यावपि तथैवान्ये केवलतान्त्रिकीम् ।
उपासीरन्नतः पूर्वं वैदिकी लिख्यतेऽधुना ॥ ८३ ॥

पितामहादिस्मृत्युक्ता तान्त्रिकी चागमोदिता ।
स्नातसूक्तप्रकारेण क्षालिताङ्घ्रिकरद्वयः ॥ ८४ ॥

स्वाचान्तः सपवित्रस्तन्मन्त्रवत् प्रोक्षयेद् द्विजः ।
मन्त्राणां तदृषिच्छन्दोदेवताविनियोगवत् ॥ ८५ ॥

अनुष्ठानं फलाय स्यादन्यथा चेत् तदासुरम् ।
दधिक्राविण्ण इत्यादेर्वामदेवो ह्यृषिः स्मृतः ॥ ८६ ॥

छन्दोऽनुष्टुप् तथैवापो विश्वेदेवाश्च दैवतम् ।
अनया प्रोक्षयित्वाथ मन्त्रिताम्भः पिबेद् द्विजः ॥ ८७ ॥

सूर्यश्चेत्यादिमन्त्रस्यच्छन्दो गायत्रमेव हि ।
सविता देवतागस्त्यो ह्यृषिरग्निर्भवेदपि ॥ ८८ ॥

तेन पीत्वापै आचम्य प्रोक्षयेदाप्यदैवतैः ।
दधिक्राविण्णआद्येनाप्यापोहिष्ठादिभिस्तथा ॥ ८९ ॥

आपोहिष्ठादिकानां तु सिन्धुद्वीप ऋषिः स्मृतः ।
आपो वै देवता छन्दो गायत्रं प्रोक्षणे विधिः ॥ ९० ॥

ततोऽञ्जलिं समापूर्य तोयैः प्राग्वदनः स्थितः ।
ध्यायेज्ज्योतिः परं ब्रह्म सर्वलोकहृदि स्थितम् ॥ ९१ ॥

आदित्यमण्डलान्तस्थं विद्याद्दे देहात्मकं पुरम् ।
तारव्याहृतिसावित्र्या क्षिपेदूर्ध्वं यथाश्रुति ॥ ९२ ॥

ता आपो घ्नन्ति रक्षांसि वज्रीभूताः क्षणेन तु ।
ततः प्रदक्षिणीकृत्य समाचम्य तु तां जपेत् ॥ ९३ ॥

शुद्धायां भुवि वाग्यतस्त्वभिमुखः सूर्यं कुशेषु स्थितो
गायत्रीं दशतारकां सशिरसं सव्याहृतिं त्रिः पठन् ।
प्राणायामपरो भवेज्जपविधेरादौ यथाशक्तित-
स्तेन स्यात् परिशुद्धकल्मषतनुर्योग्यश्च जप्यादिषु ॥ ९४ ॥

---

१. 'त्रि', २. 'त' ग. पाठः. ३. 'याद्देवात्मकं पर' ख. पाठः. ४. 'यौ श्रु'

प्रणवस्य मुनिर्ब्रह्मा छन्दो गायत्रमेव च ।
ध्यानकाले परं ब्रह्म होमकाले हुताशनः ॥ ९५ ॥
जपकाले त्रयी देवो[1] विश्वेऽन्यत्र तु दैवतम् ।
विनियोगस्तु वेदादौ वाचामुद्धात[2] एव च ॥ ९६ ॥

गायत्र्युष्णिगनुष्टुभश्च बृहतीं पङ्क्तिं सत्रिष्टुब्जग-
त्याख्या व्याहृतिसप्तकस्य तु पुनश्छन्दांसि तासामृषीन् ।
अत्रिं चैव भृगुं च कुत्समपरं प्राहुर्वसिष्ठं तत-
स्तद्वद् गौतमकाश्यपावपि पुनस्तत्राङ्गिराः सप्तमः ॥ ९७ ॥

अग्निर्वायुः सूर्यवागीश्वराभ्यां यादोनाथो वासवश्चाथ विश्वे ।
सप्त ख्याता देवता व्याहृतीनां स्थानान्याहुः सप्त भूरादिलोकान् ॥ ९८ ॥

विश्वामित्रस्त्वृषिर्देवः सविता भगवान् स्वयम् ।
छन्दस्तथैव गायत्रं सावित्र्यास्तत्रयं स्मरेत् ॥ ९९ ॥

सेयं चतुर्विंशतिवर्णवेद्या त्रिपाज्जपेऽष्टार्णविभागतः स्यात् ।
होमे च पूजाविषये चतुष्पात् स्ववर्णषट्क[3]प्रविभक्तपादा ॥ १०० ॥

ओमापोज्योतिरित्यादेर्गायत्रीशिरसो मुनिः ।
ब्रह्मानुष्टुब् भवेच्छन्दः परमात्माधिदैवतम् ॥ १०१ ॥

प्रजापतिस्तथा दैवं शिरसोऽन्तस्य वा भवेत् ।
आयात्वादेर्वामदेवो मुनिः स्याच्छन्दोऽनुष्टुब् दैवतं सैव देवी ।
गायत्रीत्थं सम्यगावाह्य विद्वान् मन्त्रेणातो दर्भपाणिर्जपेत् ताम् ॥ १०२ ॥

षट्कुक्षिं त्रिपदां च पञ्चशिरसं शुक्लां सरोजेक्षणां
वह्न्युद्द्योतशिखां च वेदजननीं भूपादपीठामपि ।
शक्रप्रेतपनीरपार्थदहरित्स्वोर्ध्वाधराशोदरां
क्रोडीभूतजगत्त्रयामभिमुखां पौराणनाभिं स्मरेत् ॥ १०३ ॥

शीक्षा कल्पो ज्योतिषं शब्दशास्त्रं मूर्धानोऽस्याः स्युर्निरुक्तं च पञ्च ।
वायुः प्राणो विष्णुरात्मा ललाटं ब्रह्मा रुद्रस्तच्छिखा वाक् च जिह्वा ॥ १०४ ॥

---

१. 'वा' क. पाठः. २. 'त्पा', ३. 'ट्के' ग. पाठः.

छन्दसां तु विचितिस्तनयुग्मां धर्मशास्त्रहृदयां घनकेशीम् ।
न्यायविस्तरभुजामनलास्यां चन्द्रसूर्यनयनामुडुहाराम् ॥ १०५ ॥

मीमांसा (चा)थर्ववेदश्च चेष्टा वेदान्तः स्यान्मानसं योगसांख्ये ।
श्रोत्रे घ्राणं चापि मन्त्रास्तु यज्ञाः सर्वे चास्याः स्वाङ्गकान्तिप्रकर्षः ॥ १०६ ॥

एवंरूपां सर्वदा सर्वसिद्ध्यै ध्यात्वा देवीं साधयेत् तां जपाद्यैः ।
सन्ध्याभेदाद् ध्येयभेदो विशषात् संलिख्यन्ते जप्यसंसिद्धिहेतोः ॥ १०७ ॥

हंसारूढां सिताब्जे त्वरुणमणिलसद्भूषणां साष्टनेत्रां
वेदास्यामक्षमालां स्रुचमथ कलशं दण्डमप्यादधानाम् ।
ध्यायेद् दोर्भिश्चतुर्भिस्त्रिभुवनजननीं पूर्वसन्ध्याभिवन्द्यां
सावित्रीमृक्सवित्रीमभिनववयसं मण्डले चण्डरश्मेः ॥ १०८ ॥

तार्क्ष्यारूढाम्बुजाक्षी शतमखमणिभा शङ्खचक्रे दधाना
दोर्भिर्युक्ता चतुर्भिः स्थितिरिह जगतां या यजूंष्युद्गिरन्ती ।
व्यालोलानेकहारद्युतिरुचिरुचिरा वैष्णवी मध्यमेऽह्नः
सावित्री ध्येयरूपा विलसति सवितुर्मण्डले पीतवस्त्रा ॥ १०९ ॥

पञ्चास्यां पिङ्गविद्युत्ततिरुचिरजटामण्डलां चन्द्रमौलिं
रत्नद्भूषाभुजङ्गस्फुटमणिकिरणव्यक्तभस्माङ्गरागाम् ।
ध्यायेत् खट्वाङ्गशूले भयहरवरदे व्याघ्रचर्माम्बराढ्यां
सावित्रीं सत्रिनेत्रां परिणतवयसं सामसूतिं दधानाम् ॥ ११० ॥

"ऋषभवाहनामपरसन्ध्यायां ध्यायेदिति यावत्"

इत्थं सन्ध्यात्रये त्रेधा सावित्री ध्येयविग्रहा ॥ १११ ॥

अथास्याः प्रतिवर्णं तु दैवतानि भवन्ति हि ।
अग्निः प्रजापतिः सोम ईशानः सूर्य एव च ॥ ११२ ॥

बृहस्पतिस्तथैवेन्द्रो भगश्चैवार्यमा तथा ।
सविता च ततस्त्वष्टा पूषाथेन्द्रानलौ मरुत् ॥ ११३ ॥

ईश्वरो मित्रावरुणौ स्कन्दो विश्वेऽथ चक्रभृत् ।
वसवो मरुतोऽर्थेशश्चाश्विनौ च पितामहः ॥ ११४ ॥

---

१. 'दाद् वि' क. पाठः.

तत्काराद्यक्षराणां तु देवताः क्रमशो मताः ।

पुरैव सामान्यतयात्र तारकः प्रकाशितो व्याहृतिसप्तकक्रमात् ।
यथार्थसंज्ञो[2] विधिवन्निरुच्यते सभूर्भुवःस्वर्महसां जनस्तपः ॥ ११५ ॥

तदेव सत्यं सवितुर्हि मण्डले स्थितं तु तेजः खलु भूर्हि सत्तया ।
भुवश्च तत्कारणकार्यसत्तया[3] सुवो जगत्स्वीरितमात्मवत्तया ॥ ११६ ॥

महः प्रकाशात्मतया महत्तया जनस्तथा सर्वजनान्तरात्मता ।
तमोहरं यत् तपतीत्यतस्तपः परं हि तत् सत्यमनन्तमुच्यते ॥ ११७ ॥

प्रणवेनाथ संबन्धो व्याहृतीनामिहोच्यते ॥ ११८ ॥

भूः स्यादकारस्तु भुवो ह्युकारः स्वः स्यान्मकारोऽपि महोऽथ बिन्दुः ।
नादो जनः स्यात् तप एव शक्तिर्नादान्तसंज्ञं पदमत्र सत्यम् ॥ ११९ ॥

अथार्थप्रतिपत्त्यर्थं सावित्र्यास्तन्निरुच्यते ।
तदिति स्याद् द्वितीयैकवचनं ब्रह्मवाचकम् ॥ १२० ॥

सूर्यमण्डलगं तेजस्तद् ब्रह्म परमं हि यत् ।
षष्ठ्यन्तः सवितुःशब्दो धातोः प्रसववाचकात् ॥ १२१ ॥

वृष्टेश्च प्राणिजातानां साक्षात् प्रसवितुर्विभोः ।
वरेण्यं वरणीयत्वाच्चतुर्वर्गफलार्थिभिः ॥ १२२ ॥

प्रथमाष्टाक्षरस्यास्य व्याप्त्या भूर्व्याहृतिः स्मृता ।
भक्तिगम्यं भवेद् भर्गः पापभञ्जनतोऽपि वा ॥ १२३ ॥

देवस्येति च षष्ठ्यन्तं वृष्ट्यादेर्दातुरीशितुः ।
दीव्यमानस्य वा दीप्त्या स्वप्रकाशतयाथवा ॥ १२४ ॥

तद् धीमहि ध्यैचिन्तायांधातोः सिद्धं हि यत् पदम् ।
तेजः सूर्यात्मकं ज्ञेयं चिन्तयामः शिवात्मकम् ॥ १२५ ॥

द्वितीयाष्टाक्षरस्यास्य व्याप्त्या स्याद् व्याहृतिर्भुवः ।
धियो बुद्धीर्मनोरस्य च्छान्दसत्वमुदीरितम् ॥ १२६ ॥

---

१. 'र्यां' ग. पाठः　२. 'संज्ञामभिनिर्भिन्न'　३. 'वर्तया' ख. पाठः

कुतश्च लिङ्गव्यत्यासः सूत्रात् सुप्तिङुपग्रहात् ।
य इत्यत्र तु यत् तेजो नः षष्ठी युष्मदस्मदोः ॥ १२७ ॥
तस्मादस्माकमित्यर्थः प्रार्थनायां प्रचोदयात् ।
तृतीयाष्टाक्षरस्यापि व्याहृतिः स्वरिति स्मृता ॥ १२८ ॥

इत्थं जगत्प्रसवितुर्वरणीयमर्थं पापप्रभञ्जनकरं यदभीष्टदस्य ।
तेजस्तदेकममलं प्रविचिन्तयामः प्रज्ञां प्रयच्छतु स नो भगवान् महेशः ॥

इत्युक्तोऽर्थोऽत्र सावित्र्यास्तच्छिरः कथ्यतेऽधुना ।
आपो ज्योती रस इति सोमाग्न्योस्तेज उच्यते ॥ १३० ॥
तत्तेजो ह्यमृतं ब्रह्म सूर्य आत्मेति चोदना ।
एवं ज्ञात्वार्थतस्त्वेतान् न्यस्येद् देहे यथाक्रमम् ॥ १३१ ॥
शिरोभ्रूमध्यनयनवक्त्रकण्ठेष्वथो हृदि ।
नाभौ च गुह्यजान्वङ्घ्रिद्वये चास्याः पदैर्न्यसेत् ॥ १३२ ॥
ब्रह्मा विष्णुश्च रुद्रश्चापीश्वरोऽपि सदाशिवः ।
एते सर्वात्मने जातियुक्ताङ्गमनवः क्रमात् ॥ १३३ ॥
इत्थं विन्यस्य गायत्रीमृष्यादीनभिवन्द्य च ।
जपेदायम्य तु प्राणाननन्तफलभाग् भवेत् ॥ १३४ ॥
प्रणवान्तरितं सप्तव्याहृतिप्रणवं पुनः ।
सावित्रीं शिरसा युक्तां जपेच्छतगुणं फलम् ॥ १३५ ॥
अष्टोत्तरसहस्रं तु जपेदेवमनन्यधीः ।
तदशक्तौ शतं वापि दशमात्र[1]मथापि वा ॥ १३६ ॥
पूर्वः पूर्वोऽत्र मुख्यः स्याज्जपशक्तिं न हापयेत् ।
अथोद्वासनमन्त्रस्य तूत्तमेशिखरेत्यृचः ॥ १३७ ॥
सावित्री देवतानुष्टुब् वामदेव ऋषिर्मतः ।
मित्रस्येत्याद्युपस्थानमन्त्राणां कौशिकस्त्वृषिः ॥ १३८ ॥
मित्रस्तु देवता छन्दो गायत्रं चाप्यनुष्टुभात् ।
प्रदक्षिणं परिक्रम्य दिशोऽथ सदिगीश्वराः ॥ १३९ ॥

---

1. 'त्र तथा' ख. पाठः.

अभिवन्द्य ततः पश्च सन्ध्याद्या देवताः क्रमात् ।
सहस्ररश्मिमुद्यन्तमुपतिष्ठेद् दिवाकरम् ॥ १४० ॥

आत्मानं परमात्मानं ध्यात्वा पादाभिवादनम् ।
कृत्वाथ देवपूजां च होमजप्यं समाचरेत् ॥ १४१ ॥

अथातो विनियोगाद्यं सावित्र्याः कथ्यतेऽधुना ।

प्रत्याहारः शस्तदेशे तु लक्षं तिष्ठन् युक्तात्मा सूर्यबिम्बं जपित्वा ।
पश्यन् गव्याक्तैस्तावदग्नौ तिलैः स्याद्धुत्वा भक्तश्चेन्मन्त्रसिद्धो महात्मा ॥ १४२॥

अयुतं तु जले स्थितो जपित्वा ननु पापानि निहन्ति नाभिमात्रे ।
प्रयुतादुपपातकानि लक्षादखिलान्येव हि पातकानि हन्यात् ॥ १४३ ॥

दशलक्षजपेन कण्ठमात्रे सुमहापातकिनोऽप्सु यान्ति शुद्धिम् ।
त्रिसहस्रजपादभोज्यदोषात् परिशुध्येदपि वाङ्मनःकृताद्यैः ॥ १४४ ॥

अपहन्त्यपमृत्युरोगदुःखान्ययुतानां त्रितयं तिलाज्यहोमात् ।
मधुरत्रयसिक्तदौर्वलक्षत्रयहोमादपहन्ति कालमृत्युम् ॥ १४५ ॥

पुत्रं शालिहुतेन बिल्वकमलैर्लक्ष्मीं पलाशैः पशू-
　नन्नाद्यं सघृतान्नतस्तु कुमुदैर्वासांसि चैवोत्पलैः ।
वृष्टिं वेतसजैः सगोमयशिलामालेयगोरोचना-
　क्तं लोकवशीकरं तु तिलकं स्पृष्टं सहस्रत्रयम् ॥ १४६ ॥

पादपांसुकृतपुत्तलिहोमान्मारयेत् परमतीत्य तु विप्रम् ।
द्वेषयेच्च कलिवृक्षसमिद्भिश्चाटयेत् तदनले कलिपत्रैः ॥ १४७ ॥

कुन्दपुष्पहवनेन कुमारीं विन्दतेऽथ करवीरहुतात् स्युः ।
सिद्धयः स खलु कोटिजपात् स्यात् खेचरः सुरमुनीन्द्रसमेतः ॥ १४८ ॥

जुहुयात् पायसेनाज्यतिलदूर्वाङ्कुरैरपि ॥ १४९ ॥

चतुःक्षीरसमिद्भिश्च प्रत्येकं त्रिसहस्रकम् ।
यद्यदुद्दिश्य तत् सर्वमचिरेणैव सिध्यति ॥ १५० ॥

---

१. 'शस्तं ति' ख. पाठः

जुहुयात् पायसाज्याभ्यां तिलदूर्वाङ्कुरैरपि ।
प्रत्यक्षरसहस्रं तु दीर्घमायुरवाप्नुयात् ॥ १५१ ॥

मधुरत्रयसिक्तरक्तपद्मैरयुतं यो जुहुयाच्छ्रियं स विन्देत् ।
सघृतान्नहुतादथान्नवान् स्याद् विधिवद्वह्निमुखादिकं च कृत्वा ॥ १५२ ॥

आधाय वह्निं विधिवत् सूर्यमावाह्य तन्मुखे ।
तमप्याराध्य विधिवत् सावित्रीं तद्धृदम्बुजे ॥ १५३ ॥

समावाह्य तु मन्त्रेण ध्यायेत् सन्ध्योक्तलक्षणाम् ।
सपूज्य गन्धपुष्पाद्यैर्द्वादशान्तामृताप्लुताम् ॥ १५४ ॥

स्वकृत्यं चापि सङ्कल्प्य जुह्वन् स लभते फलम् ।
अथ माध्यन्दिनं कर्म स्नानपूर्वं समाचरेत् ॥ १५५ ॥

स्नानं प्राग्वद् विशेषोऽत्र वैदिकः कथ्यतेऽधुना ।
प्रातःस्नानमृतेऽन्यत्र स्नास्यन् दन्तान् न धावयेत् ॥ १५६ ॥

हिरण्यशृङ्गमित्यादि पुनन्तु पुनरन्ततः ।
जपेन्निमज्ज्याथाचम्य गृहीत्वाञ्जलिना जलम् ॥ १५७ ॥

सुमित्राद्येन सन्त्वन्तं जपित्वारिदिशं प्रति ।
दुर्मित्राद्येन द्विष्मोऽन्तं प्रक्षिप्याचम्य वाग्यतः ॥ १५८ ॥

यदपांक्रूरमित्यादि गच्छतादन्तमम्भसि ।
त्रिरावर्त्य करेणाथ निमज्ज्याम्भस्तटं गतः ॥ १५९ ॥

उपविश्य तथाचम्य पाणिस्थाम्भोऽभिमन्त्र्य तु ।
आपः पुनन्त्वित्याद्येन स्वाहान्तं तत् पिबेत् पुनः ॥ १६० ॥

आचामेदस्य चर्षिः स्याद् ब्रह्मणस्पतिसंज्ञितः ।
देवताप्याप एव स्याच्छन्दोऽनुष्टुप् प्रकीर्तिता ॥ १६१ ॥

आपोहिष्ठादितिसृभिः प्रोक्षयेद् दर्भपाणिना ।
हिरण्यवर्णाः शुचयः पवमानः सुवर्जनः ॥ १६२ ॥

इत्यादिमन्त्रैः संप्रोक्ष्य ततोऽम्भोमग्नविग्रहः ।
ऋतं च सत्यं चेत्यादिस्वरित्यन्तमृचां त्रयम् ॥ १६३ ॥

प्राणानायम्य मनसा जपेत् त्रिरघमर्षणम् ।
शक्तः स चेदिमाँस्तदापोवरुणपूर्वकैः ॥ १६४ ॥
सुवानोइन्दुरित्यन्तमन्त्रैः कृत्वाघमर्षणम् ।
उत्तीर्य वासो निष्पीड्याथाम्बरे शुचिनिर्मले ॥ १६५ ॥
परिधायाथ संक्षाल्य पादावाचम्य वाग्यतः ।
सन्तर्प्य पूर्वसन्ध्यावत् सावित्रीं शक्तितो जपेत् ॥ १६६ ॥
तिष्ठंश्चेदीक्षमाणोऽर्कमासीनः प्राङ्मुखो जपेत् ।
ततः पुष्पाञ्जलिं दद्याद् भानवे केवलाम्बु वा ॥ १६७ ॥
अथोर्ध्वबाहुरादित्यमुपतिष्ठेदिमां जपन्[1] ।
उद्वयादिमुदुत्यादिं चित्रंतच्चक्षुरादितः ॥ १६८ ॥
हिरण्ययूपनामा स्याद्दषिरासां प्रकीर्तितः ।
उदुत्यादिद्वयेच्छन्दस्त्रिष्टुप् स्याद् दैवतं रविः ॥ १६९ ॥
गायत्री स्यात् तृतीयायाश्चतुर्थ्या जगती मता ।
उष्णिक् तच्चक्षुराद्यस्य मन्त्रस्य सविता विधिः[3] ॥ १७० ॥
ब्रह्मयज्ञं ततः कुर्यात् स्वाध्यायः स उदीरितः ।
ब्रह्मयज्ञोत्तरं कालं तर्पणस्याश्वलायनः ॥ १७१ ॥
प्राहेतरेषां तु मतं तूपस्थानादनन्तरम् ।
साङ्गमूलादिभिर्मन्त्रैः स्वागमोक्तविधानतः ॥ १७२ ॥
देवान् ऋषीन् पितॄंश्चान्यान् तर्पयेयुर्हि दीक्षिताः ।
स्नानकालेऽम्भसः क्षोभं न कुर्याच्चरणादिभिः ॥ १७३ ॥
अन्तर्मलापनयनं वस्त्रनिर्णेजनादि वा ।
यदि कुर्यात् प्रमादेन प्रायश्चित्तमिहोच्यते ॥ १७४ ॥
नमोऽग्नयेऽप्सुमते नमोऽभ्योन्तं जपेद् द्विजः ।
उपतिष्ठेद् द्विजातिश्चेदितरोऽभ्यो नमो वदेत् ॥ १७५ ॥
ततोऽनुज्ञां गृहीत्वाभ्यस्तार्थानुद्वास्य दैवतैः ।
ऋषीन् पितॄनप्युद्वास्य ततो यागगृहं व्रजेत् ॥ १७६ ॥

---

१. 'पेत्।' क. पाठः. २. 'ह' ग. पाठः. ३. 'धिपः' ख. पाठः.

तत्रेष्टां देवतामिष्ट्वा स्वागमाचार्यदर्शनात्।
तत्तन्मन्त्रं जपेद्धोमवैश्वदेवबलिक्रियाः ॥ १७७ ॥
समाप्यातिथिपोष्यादीन् भोजयित्वा स्वशक्तितः ।
स्वयं भुञ्जीत पुत्राद्यैः सहितोऽन्नमकुत्सयन् ॥ १७८ ॥
भुक्त्वान्नगन्धलेपाद्यमपनीय च शोधयेत् ।
दन्तानथ समाचम्य मुखवासं भजेदपि ॥ १७९ ।
ततो विद्याविनोदाद्यैर्दिनशेषं सुखं नयेत् ।
अथार्धास्तमिते भानौ सन्ध्यामासाद्य पश्चिमाम् ॥ १८० ॥
उपासीत यथापूर्वं दन्तधावनवर्जितम् ।
स्नात्वाचम्याथ सम्प्रोक्ष्य पीत्वाम्भोऽग्निश्चमन्त्रतः ॥ १८१ ॥
ऊर्ध्वं त्वापस्तथा क्षिप्त्वा गायत्रीं शक्तितो जपेत् ।
इमंमेवरुणाद्याभिरुपस्थायाथ पूर्ववत् ॥ १८२ ॥
गन्धाद्यैर्देवतामिष्ट्वा यथापूर्वं स्वशक्तितः ।
जपित्वाथ नमस्कृत्य वैश्वदेवबलिक्रिया. ॥ १८३ ॥
समाप्यातिथिभृत्याद्यैः सह भुञ्जीत चेद् गृही ।
शयीत शयने शुद्धे स्वास्तीर्णे शुक्लवाससा ॥ १८४ ॥
गोविप्रदेववह्नीनां नोपरिष्टान्न सङ्कटे ।
नानुवंशं शयीतासौ नोत्तरापरदिक्शिराः ॥ १८५ ॥
न नग्नो नार्द्रपाण्यङ्घ्रिर्न तैलाक्तो न चाशुचिः ।
वितानदीपकलशैः शोभिते विभवे सति ॥ १८६ ॥
मन्त्रसन्नद्धदेहस्तु रक्षागन्धाद्यलङ्कृतः ।
स्वपत्नीं साधुशीलाढ्यां स्वनुरक्तां स्वलङ्कृताम् ॥ १८७ ॥
अपर्वस्वभिगच्छेत् तु गृही सन्तानकारणात् ।

सन्ध्योपास्तिप्रसङ्गादिति विधिविहितं नैत्यकं कर्मचक्रं
श्रौतस्मार्तेषु तन्त्रोदितमपि कथितं वर्णिनां यत् समासात् ।

---

१. 'च' ग. पाठः.

दृष्टादृष्टेष्टसिद्धिप्रदमिह मुनिभिः[1] सेवितं चेति सन्तः
स्वीकुर्वन्तु स्वकीयं धनमिव सुहृदः सत्पथे वर्तयन्तः ॥ १८८½ ॥

इति श्रीमदीशानशिवगुरुदेवपद्धतौ तन्त्र-
सारे नित्यकर्मविधिर्नाम
नवमः पटलः।

---

अथ दशमः पटलः।

प्रणम्य शम्भुं शशिखण्डशेखरं भवं भवच्छेदकरं समासतः।
सभूतशुद्धिक्रममात्मशोधनं निगद्यते यो[2]गजपादिसिद्धये ॥ १ ॥

स्नातो यथावत् समुपास्य सन्ध्यां यागालयं प्राप्य कृताङ्घ्रिशौचः।
आचम्य चान्तर्विधिवत् प्रविष्टः शस्तासने वाग्यमवान् निविष्टः ॥ २ ॥

आमस्तकाङ्घ्रिद्वयमात्मदेहे ध्यायन् सु[3]सूक्ष्मं सुषिरं तदन्तः।
बाह्ये तु विन्यस्य तु शक्तिमच्छां व्योमत्विषं तामथ देहमध्ये ॥ ३ ॥

हुङ्कारबीजं रु[4]चिमद् विचिन्त्य प्राणान् नियम्याथ निवेश्य चित्तम्।
तद्रेचकान्तोऽत्र फडन्तमस्त्राद् ग्रन्थिप्रभेदं क्रमशो विदध्यात् ॥ ४ ॥

ये ग्रन्थयः पञ्च तमोमलिष्ठा हृत्कण्ठतालुस्थितयः प्रसिद्धाः।
भ्रूमध्यतो मूर्धनि चेति तेषां भेदात् तु नाडीसरणिः प्रसिध्येत् ॥ ५ ॥

वायुं निवर्त्यात्मनि पूरकान्तं चैतन्यसान्तात्मकजीवरूपम्।
तं बिन्दुभूतं च निरामयं स्वे हृत्पङ्कजे कुम्भकतो विभाव्यम् ॥ ६ ॥

तत्रोर्ध्ववायोः प्रसरेण जीवं सौषुम्नमार्गान्निहितं स्वमूर्ध्नि।
उद्घातमात्रेण तु बीजवृत्त्या तं द्वादशान्तस्थशिवं नयेत ॥ ७ ॥

कादङ्गुलद्वादशके त्वसौम्यं शुक्लं सहस्रच्छदपुण्डरीकम्।
व्योमामृतव्याप्तमधोमुखं तन्मध्यं शिवाध्यासितमभ्युपेयम् ॥ ८ ॥

लीनः शिवेऽङ्गैरभिरक्षितात्मा साधोमुखं देहतरुं विभाव्य।
तत्त्वानि षट्त्रिंशदथो विलोमान्नीत्वा लयं स्वेष्विह कारणेषु ॥ ९ ॥

---

१. 'भिर्नोपितं' ग. पाठः. २. 'या' ख. पाठः. ३. 'प्र' ग. पाठः. ४. 'देहं रु' ख. पाठः. ५. 'कृ' ख., 'तमो वि' ग. पाठः.

भूम्यम्बुतेजोमरुदम्बरैः स्याद् गन्धो रसश्चाप्यथ रूपमुक्तम् ।
स्पर्शाख्यशब्दौ कथितावुपस्थं पाय्वङ्घ्रिपाण्योऽपि च वाक् च नासा ॥
जिह्वाक्षिचर्मश्रवणैर्मनः स्यात् साहङ्कृतिर्बुद्धिरपि प्रधानम् ।
पुमांश्च रागो नियतिस्त्वशुद्धा विद्या कला कालयुता च माया ॥ ११ ॥
संशुद्धविद्या च तथेश्वराख्यः सादाह्वयः शक्तिरथो शिवः स्यात् ।
षट्त्रिंशदित्थं प्रतिलोमतः स्युस्तत्त्वानि तत्तत्परकारणानि ॥ १२ ॥
पञ्चाथ भूतानि परस्परान्तः शोध्यानि खादीनि विलोममार्गात् ।
ईशानपूर्वैः समधिष्ठितैस्तैरक्षैश्च बिम्बार्णकलाधिदैवैः ॥ १३ ॥
भूमण्डलं यच्चतुरश्रपीतं वज्राङ्कितं गन्धगुणं ससद्यम् ।
घ्राणेन्द्रियं तत्कलया निवृत्त्या युक्तं च दैवेन चतुर्मुखेन ॥ १४ ॥
ह्लांबीजतः पूरककुम्भकाभ्यां व्याप्तं तदा पादतलं शिरस्तः ।
शोध्यं तदुद्धातकपञ्चकात् स्याद् वायौ प्रविष्टं परिभावयेच्च ॥ १५ ॥
अब्बिम्बमर्धेन्दुसिताब्जचिह्नं शुक्लं रसाढ्यं[2] रसनेन्द्रियं च ।
वामास्थितं विष्णुसमन्वितं स्याद् युक्तं प्रतिष्ठाकलया विशोध्यम् ॥ १६ ॥
ह्वींबीजमुद्धातचतुष्टयान्तं तच्चाग्निभूतं प्रविशन्त्यपश्चात् ।
वह्नेस्त्रिकोणारुणमण्डलं स्याद् विद्यातलं[3] स्वस्तिकलाञ्छनं च ॥ १७ ॥
दृगिन्द्रियं रूपगुणं सरुद्रं ह्रूंबीजतोऽघोरयुतं विशोध्यम् ।
त्र्युद्धाततस्तत्सलिले प्रविष्टं विचिन्तयेद् व्याप्तसमस्तदेहम् ॥ १८ ॥
षड्बिन्दुचिह्नं त्वथ वायुबिम्बं कृष्णं षडश्रं पुरुषास्थितं तत् ।
त्वक्स्पर्शशान्त्यन्वितमीश्वरेण ह्वैंयुक्तमुद्धातयुगात् कुभूतम् ॥ १९ ॥
वृत्तं खबिम्बं स्फटिकावदातं सश्रोत्रशब्दं च सबिन्दुशक्ति ।
ईशानसादेशयुतं त्वतीतं चोद्धातशोध्यं खलु हुंफडन्तात्[4] ॥ २० ॥
तद्द्वादशान्तःस्थितमूलमन्त्राच्चन्द्रामृतासारजलैः समस्तम् ।
आप्लाव्य निर्वर्तितभूतशुद्धिः संपाद्य तत्त्वानि यथाक्रमेण ॥ २१ ॥
शिवेच्छयोत्पादितशुद्धदेहो हृद्यासनं तु प्रणवेन दत्त्वा ।
तद्व्यापिनीं न्यस्य शिवां तु शक्तिं स्वबीजजीवं निहितं शिवाख्ये ॥ २२ ॥

---

१. 'प्रह्वणै' ग. पाठः. २. 'सराढ्यं', ३. 'कलां स्व', ४. 'मू' ख. पाठः.

तद्द्वादशान्तादथ पूरकेण त्वानीय नाड्या हृदयाब्जमध्ये।
संस्थाप्य मूलामृतवारिपूरैराप्लाव्य पूजादिकमारभेत ॥ २३ ॥

भूतशुद्ध्यधिकारः।

अत्रोच्यतेऽन्या स्फुटमात्मशुद्धिर्या शोषणादिक्रमशोध्यदेहा।
निश्शेषदोषक्षयशुद्धिदानाद् रोगान् जरां मृत्युमपि क्षिणोति ॥ २४ ॥
प्राग्वत् स्वदेहे सुषिरं तु चिन्त्य तद्व्यापिनीं चान्तरबाह्यशक्तिम्।
हुङ्कारमध्यस्थितचित्तजीवः प्राणान् नियम्याहृतपूरकेण ॥ २५ ॥
ग्रन्थीन् विदार्याहृतरेचकान्तं चास्त्रेण वायुं विनिवर्त्य पूरात्।
चैतन्यमाहृत्य ससान्तजीवं हृत्संपुटं ज्योतिरनामयाख्यम् ॥ २६ ॥
तत्कुम्भकोद्घातवशात् तदूर्ध्वं त्वाकृष्य सौषुम्नपथा स्वकान्तम्।
तद्द्वादशान्तस्थशिवे नियुज्य तत्त्वानि नीत्वा विलयं विलोमात् ॥ २७ ॥
वर्णान् विलोमात् क्षहसक्रमोक्तं नीत्वा लयं शब्दततिं च शक्तौ।
शून्यं तु देहं मलपापमात्रं विचिन्त्य कृष्णं त्वथ नाभिचक्रे ॥ २८ ॥
बिम्बे तु वायोरतिधूम्रवर्णे यङ्कारमुद्भाव्य तु चण्डवायुम्।
ध्यायेदधःशाखमथोर्ध्वमूलं संसारवृक्षात्मकमात्मदेहम् ॥ २९ ॥

अत्र ब्रह्मशम्भुः—

"देहात्माधोमुखस्तत्र ध्यातव्यो भवपादपः" इति।

तं शोषयेन्नाभिविनिर्गतेन ध्यात्वानिलेनाघमले च शोष्ये।
उद्घातकैः पञ्चभिरस्य शोषं वायोर्निरोधेन विधाय पश्चात् ॥ ३० ॥
हृत्पङ्कजेऽन्त्यं विषवह्निवायुं सानुग्रहार्धेन्दुयुतं सनादम्।
बीजं तु चिन्तामणिसंज्ञमेतद् बिम्बे हुताशस्य तु वह्निरूपम् ॥ ३१ ॥
विन्यस्य षट्कोणलसत्त्रिशूलज्वालासहस्रप्रसरैरघौघम्।
सम्यग् दहन्तं तु कलेबराख्यं तद्भस्मसाद्भूतमपीह चिन्त्यम् ॥ ३२ ॥

"दहेत पाशुपतास्त्रेण" इति पराख्यपौष्करयोरुक्तत्वात् पाशुपतास्त्रेण वा तद् दहेत्।

प्रोत्सार्य चण्डानिलवायुबीजात् तद् भस्म सर्वं तु दिशो विकीर्य ।
शून्यं खतुल्यं परिभाव्य देहं शुद्धं तु तत् केवलपुण्यशेषम्[1] ॥ ३३ ॥

अत्र ब्रह्मशम्भुः—

"कुम्भकेनाग्निना शुष्कं निर्दग्ध च विचिन्तयेत् ।
रेचकेनाथ वायव्याद् भस्मीभूतं दिशो दश ॥
प्रलीनमन्त्यया शुद्धं निर्मलं व्योम भावयेत् ।" इति ।
"कलेबरं दहेद् धीमान् भस्मकूटव्यवस्थितम् ।"

इति श्रीकालोत्तरे ।

व्योमाम्बुजान्तस्थशिवस्य शक्तेरिच्छाक्रियाज्ञानवशात् सिसृक्षोः ।
शक्तेर्[2]यथावल्लिपिवर्णपूगैस्तत्त्वानि चोत्पाद्य तु तैः शरीरम् ॥ ३४ ॥

सृष्ट्वा तदण्डात्मकविश्वलोकं संभाव्य शुद्धं गतपाशबन्धम् ।
प्राग्द्वादशान्ता[3]हितबीजजीवं त्वाकृ[4]ष्य तत्पूरकवायुमिश्रम् ॥ ३५ ॥

तद्ब्रह्मरन्ध्रेण निवेश्य मार्गाद्धृदब्जमध्ये शिवमात्मरूपम् ।
व्योमाब्जमध्येन्दुकलास्वराढ्यं द्व्यष्टच्छदाधारसुधाकलाभिः ॥ ३६ ॥

सौषुम्नमार्गेण पृथग् यथावदापूरयेद् व्युत्क्रमतः स्वराणाम् ।

सामृता मानसी तुष्टिपुष्टी तथा प्रीतिरुक्ता रतिः श्रीश्च शान्तिः स्वधा ।
कान्त्यथ ज्योत्स्नया हैमवत्या प्रभा पूरणी वामया स्यादमा षोडशी ॥ ३७ ॥

दक्षिणाङ्गुष्ठतो गुल्फजानू कटिश्चोदरं पाणिसन्धिर्भुजो दक्षिणः ।
मूर्ध्नि चार्धं क्रमाद् वामभागेऽपि च स्थानमुक्त कलास्तद्विलोमान्न्यसेत् ॥

"अः अमायै नमः । अं वामायै नमः । औं पूरण्यै नमः ।"

इत्यङ्गुष्ठादिमूर्धान्तं षोडशकला विन्यस्य तदमृतैः क्रमादापूरयेदित्युपदेशः ।

तोयमर्धेन्दुमत्पूर्णचन्द्रप्रभं स्वाम्बुजे भावयेत् तत्कलार्तस्वरम् ।
शङ्खकुन्देन्दुगोक्षीरगौरामृतैर्ब्रह्मनीडापथापूर्य देहं स्वकम्[5] ॥ ३९ ॥

---

१. 'देवम्' ग. पाठः. २. 'क्तै' घ. पाठः. ३. 'दा', ४. 'मृ', ५. 'वकम' ग. पाठः.

अत्र ब्रह्मशम्भुः —

"तत्सुधाधवलापूरासिक्तं कृत्वा निरन्तरम् ।" इति ।

श्रीकालोत्तरे च —

"चन्द्रबिम्बं स्मरेत् तत्र श्वेतपद्मोपरि स्थितम् ।
स्रवन्तममृतं दिव्यं शरीरोत्पत्तिकारणम् ॥" इति ।

द्व्यष्टवर्णाकृतिं शुद्धविद्यातनुं तत् सुधापूरणप्लाव्यमानाकृतिम् ।
पुण्यपूगार्जितं शुद्धमित्थं धिया यः स्मरेदेकदाप्येष योगी भवेत् ॥ ४० ॥

इत्थमभ्यासतः शुद्धसत्त्वः स्वयं शक्तिपातं लभेतेश्वरानुग्रहात् ।
जप्यपूजादिभिश्चेष्टसिद्धिं तदा सुप्रसन्ना मुखान्निस्सरेद् भारती ॥ ४१ ॥

नहि सलिलविशेषैः केवलं क्षालनाद्यैः प्रभवति परिशुद्धं यन्मलिष्ठं शरीरम् ।
द्विविधमितिह सद्भिः सान्तरश्चात्मशुद्धिः सविधिकमुपदिष्टां तां भजे नित्यशोऽपि॥

इति श्रीमदीशानशिवगुरुदेवपद्धतौ तन्त्रसारे
भूतशुद्ध्यादिपटलो दशमः ।

---

## अथैकादशः पटलः ।

अथोच्यते सिद्धिकरी मनूनां दीक्षा यथा सा च चतुष्प्रकारा ।
तथाहि मन्त्री प्रथमाथ शैवी शाक्तेयिकाख्या त्वथ वैष्णवी च ॥ १ ॥

ददाति यस्मादिह दिव्यभावं मायामले कर्म च संक्षिणोति ।
फलं चतुर्वर्गमयं च यस्यास्तस्मात् तु दीक्षेत्यभिधानमस्याः ॥ २ ॥

सामान्यभूता खलु मान्त्रिकी स्याद् दीक्षा स्मृता मन्त्रगणेषु तद्वत् ।
वर्णेषु चापि द्विजपूर्वकेषु स्याच्छैवशाक्तेष्वपि वैष्णवेषु ॥ ३ ॥

कौबेरदिग्भागगते दिनेशे पुण्यर्क्षयोगे सुतिथौ सुलग्ने ।
पक्षे तु पूर्वे विदधीत दीक्षामाचार्यशिष्याभ्युदयप्रदे च ॥ ४ ॥

दीक्षासु देवालयमण्डपानां वेश्मादिकृत्येऽपि च विघ्नशान्त्यै ।
वास्त्वीशपूजां प्रथमं विदध्यात् संवर्तयेत्[1] सर्वसमीहितानाम् ॥ ५ ॥

---

1. 'वः स' ग. पाठः.

वास्त्वीशनामा ह्यसुरोऽतिकायो देवैः पुरा दत्तवरोऽतिपूज्यः ।
शेते स भूम्यां प्रविसार्य पादौ हस्तौ तथाधोवदनः सदैवः ॥ ६ ॥

तद्देहसंस्थाः खलु देवतास्ता द्वात्रिंशदन्ये प्रकृतिप्रसंख्याः ।
पूज्याश्चतुःषष्टिपदेषु विप्रैरेकोत्तराशीतिपदे नृपाद्यैः ॥ ७ ॥

उद्दिष्टदेशे नवगोमयाम्भःसेकोपलिप्ते चतुरश्रमादौ ।
कृत्वाष्टधा तद् विभजेदथैवमुक्तं चतुष्षष्टिपदं तु तत् स्यात् ॥ ८ ॥

तस्मिन् विभक्ते नवधा तु सूत्राण्यास्फाल्य संमिश्रितपिष्टचूर्णम् ।
एकोत्तराशीतिपदं तदुक्तं देवालयानामपि भूमिपानाम् ॥ ९ ॥

कृत्वा चतुष्षष्टिपदं तु तस्मिन् कोणेषु सूत्रेऽपि निवेश्य तत्र ।
मध्ये पदानां हि चतुष्टये स्याद् ब्रह्मादिपूज्यस्तदनन्तरश्च ॥ १० ॥

पूर्वादिदिक्कोष्ठयुगेषु तद्वच्चार्यो विवस्वानथ मित्रनामा ।
महीधराख्यश्च तदन्तराले कोणार्धयुग्मेषु वदामि देवान् ॥ ११ ॥

सावित्रः सविता च वह्निदिशि तत् स्यातां पदार्धे गता-
विन्द्रश्चेन्द्रजयश्च राक्षसदिशि (ख्या?स्या)वामथो मारुते ।
रुद्रो रुद्रजयस्तथेशदिशि चाप्यापापवत्साह्वयौ
बाह्ये कोणचतुष्टयेऽपि च पुनर्वक्ष्यामि देवाष्टकम् ॥ १२ ॥

शर्वस्कन्दो यमाह्वश्च जम्भकः पिलिपिञ्जकः ।
चरकी च विदारी च पूतना पापराक्षसी ॥ १३ ॥

अथ प्रान्तचतुष्पङ्क्तिद्वात्रिंशत्कोष्ठदेवताः ।
प्रागादिक्रमशो ज्ञेयाश्चतुर्धैव चतुर्दिशम् ॥ १४ ॥

प्राच्यामीशानपर्जन्यजयन्तेन्द्रार्कसत्यकाः ।
भृशान्तरिक्षावित्यष्टौ देवताः स्युः प्रतिक्षणम् ॥ १५ ॥

अग्निः पूषाथ वितथो यमश्च गृहरक्षकः ।
गन्धर्वभृङ्गराजौ च मृगाख्योऽपि च दक्षिणे ॥ १६ ॥

निर्ऋतिर्दौवारिकश्च सुग्रीववरुणावपि ।
पुष्पदन्तासुरौ शोषः पापयक्ष्मा च पश्चिमे ॥ १७ ॥

---

१. 'सत्यश्च' ग. पाठः.

मारुतो नागमुख्यौ च भल्लाटश्च निशाकरः ।
अर्गलश्च दितिस्तद्वददितिश्चोत्तरस्थिताः ॥ १८ ॥

ईशानस्य शिरो निवेशितमभूद् वास्तोष्पतेर्मारुते
वह्नौ चापि करद्वयं पदयुगं नक्तञ्चरे स्थापितम् ।
पर्जन्यो नयने दितिश्च वदने स्यादापवत्सो गले
कर्णौ चाप्यदितिस्तथार्गलयुतावंसौ जयन्ताश्रितौ ॥ १९ ॥

शक्रश्चाथ निशाकरश्च भुजयोः पृष्ठे तु रुद्रः स्थितः
सावित्रः सविता च रोगसहिताः शोषश्च पाण्योः स्थिताः ।
नाभौ स्याच्चतुराननोऽस्य कुचयोर्भूभृत् तथैवार्यमा
मित्रश्चापि विवस्वता तदुदरे गुह्येन्द्रकश्चापरः ॥ २० ॥

ईशानपूजा तु घृताक्षताद्भिः पर्जन्यकस्योत्पलगन्धतोयैः ।
पीता जयन्तस्य भवेत् पताका रक्तान्नदीपैश्च यजेन्महेन्द्रम् ॥ २१ ॥

सूर्यस्य पीतान्नवितानकाभ्यां सत्यस्य साज्येन तथौदनेन ।
गोधूमकान्नेन भृशस्य पूजा कार्यान्तरिक्षस्य तु माषमांसैः ॥ २२ ॥

अग्निं स्रुचाभ्यर्च्य तथैव लाजैः पूषाणमिष्ट्वा वितथं च हेम्ना ।
मध्वोदनाभ्यां गृहरक्षकं च मांसौदनाभ्यां यममर्चयेच्च ॥ २३ ॥

गन्धर्वमिष्ट्वा कुसुमैः सगन्धैः स्यात् पक्षिजिह्वा त्वथ भृङ्गराजे ।
पूजा मृगस्यापि तिलैर्यवैः स्यात् पित्र्यं निर्ऋत्यै कृसरं यथावत् ॥ २४ ॥

दौवारिकं शोभनदन्तकाष्ठैः सुग्रीवमिष्ट्वा तु यवैः सधूपैः ।
स्तम्बैः कुशानामपि पुष्पदन्तं तद्वज्जलेशं सितपुण्डरीकैः ॥ २५ ॥

मध्वक्षताभ्यामसुराय पूजा शोषाय चान्नं घृतमिश्रितं स्यात् ।
नीवारकान्नं त्वथ पापयक्ष्मण्याज्येन वायोरपि मण्डकानि ॥ २६ ॥

नागप्रसूनैरपि नागपूजां कुर्यात् तु मुख्याय तु मोदकैश्च ।
भल्लाटसंज्ञस्य समुद्गमन्नं सोमाय राज्ञे मधुपायसाज्यम् ॥ २७ ॥

शाल्यक्षतैरर्गलमर्चयित्वा संरक्तशाल्यन्नघृतैर्दितिं च ।
माषान्नभक्ष्यैरदितिं यथावद् द्वात्रिंशदित्थं क्रमशोऽर्चयित्वा ॥ २८ ॥

---

१. 'साभ्यस्य त' ग. पाठः. २. 'सुताभ्य' ख. पाठः.

आपस्तु दुग्धेन तथापवत्सः पूज्यस्तु दध्ना घृतलड्डुकैश्च ।
सावित्रमिष्ट्वाथ कुशार्गलान्नैस्तथा सवित्रे यजनं विदध्यात् ॥ २९ ॥

हारिद्रमन्नं सघृतं तथेन्द्रे शुद्धान्नमेवेन्द्रजयाय शस्तम् ।
रुद्राय मांसं विहितं तु पक्वं मांसं तथा रुद्रजये त्वपक्वम् ॥ ३० ॥

अ(त्रा)भिपूज्याः समरीचकाद्यास्ते लड्डुकालोहितशुक्लभक्तैः ।
तथैव माषैः सघृतैर्यथावत् स्वे स्वे पदे स्युश्चतुरः क्रमेण ॥ ३१ ॥

ब्रह्माणमाज्याक्षतपञ्चगव्यैः पुष्पैः सगन्धैश्चरुणा तिलैश्च ।
संपूज्य तु प्राग् घृतपायसेन शर्वाह्वयं स्कन्दमथो यजेत ॥ ३२ ॥

याम्येऽर्यम्णे समांसाज्यं ततः पीतस्रगामिषे ।
जम्भकाय तु वारुण्यां पिलिपिञ्जाय चोत्तरे ॥ ३३ ॥

सान्द्रलोहितपुष्पान्नैर्बलिमित्थं प्रदापयेत् ।
मांसौदनघृतापूपैरैशान्यां चरकीबलिः ॥ ३४ ॥

बाह्ये पित्तेन मांसेन विदार्यै वह्निदिग्बलिः ।
पूतनायास्तु राक्षस्यां दधिरक्तौदनैर्दिशि ॥ ३५ ॥

क्षीरपित्तास्थिरक्तान्नैर्वायव्यां पापराक्षसीम् ।
यजेत् सर्वान् स्वनाम्नैव नमोन्तं सोपचारकम् ॥ ३६ ॥

बाह्ये त्वष्टविधेभ्योऽथ भूतेभ्यो बलिमाहरेत् ।
प्रत्येकमुक्तद्रव्याणामलाभे कुसुमाक्षतैः ॥ ३७ ॥

सुगन्धधूपदीपैश्च शुद्धान्नेन स्मृतो बलिः ।
स्वैर्नामभिस्तु प्रणवादियुक्तैर्नमोन्तकैरर्चनमेषु कृत्वा ।
पञ्चोपचारैर्निशि शुक्लवासा विशुद्धभावस्तु बलिं विदध्यात् ॥ ३८ ॥

इत्थं वास्तुशरीरस्था देवताः सम्यगर्चिताः ।
तत्तत्कर्मसु संसिद्धिं प्रयच्छन्ति च शान्तिकम् ॥ ३९ ॥

एकाशीतिपदेषु पूर्ववदमुं विन्यस्य वास्तोष्पतिं
मध्ये तस्य तु वेधसं नवपदेष्वभ्यर्च्य तद्बाह्यतः ।
कोणेष्वत्र पदद्वयेष्वभिगताः सावित्रपूर्वाः सुरा-
स्तन्मध्ये समरीचपूर्वकसुराश्चत्वार उक्ताः क्रमात् ॥ ४० ॥

पूर्वाद्यासु दिशासु बाह्यवृतिगा एकैककोष्ठस्थिता
द्वात्रिंशत् पृथगीशपूर्वकसुराः पूज्याः पुरोवत् क्रमात् ।
बाह्येऽन्याः पदवर्जितास्तु चरकी चैशे विदार्यानले
कोणे रक्षसि पूतनाथ पवनस्याशागता राक्षसी ॥ ४१ ॥

शर्वस्कन्दादिचत्वारः पदवर्जं बहिः स्थिताः ।
प्राग्याम्यवारुणाशासु कौबेर्यां च क्रमाद् यजेत् ॥ ४२ ॥

अनयोर्मार्गयोरेकमाश्रित्यावाह्य वास्तुपम् ।
तदङ्गपदगाश्चापि देवताः क्रमशोऽर्चयेत् ॥ ४३ ॥

वास्तुविन्यासपूजाधिकारः ।

---

एवं समाराध्य तु वास्तुदेवान् द्विजातयश्चेदथ वास्तुहोमम् ।
कुर्युर्यथा वास्तुपतिः प्रशाम्येद् यथैव बोधायनदृष्टमार्गात् ॥ ४४ ॥

नवं गृहाद्यं प्रविविक्षुरग्रे तत् साध्वलङ्कृत्य तु तोरणाद्यैः ।
प्रकल्प्य कर्तुः शयनप्रदेशं तारेण संशोध्य गणेशमिष्ट्वा ॥ ४५ ॥

तद्वास्तुमध्यं च विधाय तस्मात् पूर्वोत्तरस्यां दिशि गोमयेन ।
गोचर्ममात्रं चतुरश्रबिम्बं त्वालिप्य चोल्लेखनकादि कृत्वा ॥ ४६ ॥

तस्मिन् स्वगृह्योक्तविधानतोऽग्निमाधाय तत्राग्निमुखं विधाय ।
गोक्षीरसिद्धं चरुमाज्यसिक्तं मन्त्रैर्यथावत् क्रमशो जुहोति ॥ ४७ ॥

वास्तोष्पते प्रतिजानीह्यस्मानित्यादिमुक्त्वा तु पुरोनुवाक्याम् ।
वास्तोष्पते शं मया संसदा तेत्याद्यां तु याज्यां जुहुयादुदीर्य ॥ ४८ ॥

वास्तोष्पते ध्रुवा स्थूणां सत्त्वमित्यादिमन्त्रतः ।
गृह्यं भयं यदित्याद्यमक्षिस्पन्देति चादिना ॥ ४९ ॥

दुःस्वप्ने पापस्वप्ने च यत् स्वप्नाशनआदिना ।
वास्तोष्पते प्रतरणो न एधीत्यादिनापि च ॥ ५० ॥

अमीवहा वास्तोष्पतेत्यादिना च जुहोति वै ।
एभिस्तु वैदिकैर्मन्त्रैर्हुत्वाज्येन स्रुवेण तु ॥ ५१ ॥

ततः स्विष्टकृतं कुर्यादाधेनुवरदानतः ।
अथाग्नेः पुरतो दर्भानास्तीर्य हुतशेषितम् ॥ ५२ ॥
नमो रुद्राय वास्तोष्पत इत्यादिना निक्षिपेत् ।
अनेनैव तु मन्त्रेण स्थालीं सङ्क्षाल्य तज्जलम् ॥ ५३ ॥
पात्रे प्रक्षिप्य कस्मिंश्चिच्छेषाज्यं शेषमम्बु च ।
एकीकृत्य तु मन्त्रेण शाखयोदुम्बरस्य वा ॥ ५४ ॥
पालाशशाखया वाथ दर्भमुष्ट्याथवा पुनः ।
प्रासादभवनादौ तत् सर्वत्र त्रिः प्रदक्षिणम् ॥ ५५ ॥
पर्युक्षन्नथ पर्येति ततः संपूज्य वै द्विजान् ।
त्वं विप्रस्त्वं कविरिति मन्त्रेणानेन भोजयेत् ॥ ५६ ॥
आशिषो वाचयित्वा तु शिवं वास्त्विति वाचयेत् ॥ ५७ ॥

वास्तुहोमाधिकारः ।

---

प्रासादं भवनं प्रपादिकमथो यद्वापि यागालयं
कृत्वा तक्षकरात् प्रगृह्य तु ततः सूत्रत्रयावेष्टितान् ।
कौश्या चापि च मालया तु परितः संवेष्ट्य धान्याक्षतैः
सर्वत्र प्रविकीर्य पूर्णकलशं दीपं च मध्ये न्यसेत् ॥ ५८ ॥
ततः कृणुष्वादिकमत्र सूक्तं त्वर्धर्चशोऽन्ते तु दहाशसाद्यम् ।
ऋचोऽर्धमायोज्य जपेदशेषं रक्षोघ्नमेवं तु जपादिषु स्यात् ॥ ५९ ॥
कृत्वा पुनः स्थण्डिलमग्निभागे तत्राग्निमाधाय यथाविधानम् ।
हुत्वा पुरैवाग्निमुखं जुहोतु रक्षोहणं वाजिनमित्युभाभ्याम् ॥ ६० ॥
पुनः कृणुष्वादिभिरत्र मन्त्रैराज्येन हुत्वा तु यथाक्रमेण ।
तद्वद् विभिन्नैरथ पञ्चभिश्च वेदादिमन्त्रैर्जुहुयाच्चतुर्भिः ॥ ६१ ॥
इषे त्वेत्यादिना तद्वदग्निमीळे तु चादिना ।
अग्नआयाहिपूर्वेण शन्नोदेवीरथादिना ॥ ६२ ॥
ततस्तु पञ्चदुर्गाभिर्वेदोक्ताभिर्जुहोति च ।
जातवेदस इत्याद्या ऋग् दुर्गा प्रथमा भवेत् ॥ ६३ ॥

तामग्निवर्णामित्याद्या द्वितीया ऋगुदीरिता।
अग्नेत्वंपारयानव्योअस्मानाद्यं तृतीयकम् ॥ ६४ ॥

विश्वानिनोदुर्गहाद्यश्चतुर्थो मन्त्र ईरितः।
पृतनाजितमित्यादिः पञ्चमो मन्त्र उच्यते ॥ ६५ ॥

एताभिः पञ्चदुर्गाभिराज्येन जुहुयात् पृथक्।
ततो व्याहृतिभिस्तद्वदघोरास्त्रेण वै पुनः ॥ ६६ ॥

पश्चादपामार्गसमिद्घृताभ्यामन्नेन साज्येन शतं जुहोतु।
अष्टोत्तरं स्विष्टकृतं च पश्चाच्छिष्टाज्यमादाय तथाम्बुशेषम् ॥ ६७ ॥

आदाय तद् भस्म च मिश्रयित्वा पात्रे त्वपामार्गरसेन युक्तम्।
तेनाखिलं तद्भवनं प्रमार्ज्य सम्प्रोक्षयेत् तत्परितस्तु दर्भैः ॥ ६८ ॥

तमग्निमादाय तथेशकोणे संस्थाप्य पश्चात् तु चतुष्पथे वा।
विसर्जयेदुक्तजलान्नपिण्डैर्दत्त्वा बलिं दिक्षु समाप्य चैवम् ॥ ६९ ॥

एवं तु रक्षोहणशान्तिरुक्ता रोगापमृत्युग्रहदोषहन्त्री।
रक्षाकरी श्रीविजयायुषां स्याद् वृद्धिप्रदैषा विधिवत् प्रयुक्ता ॥ ७० ॥

दीक्षाप्रसङ्गादिति वास्तुपूजा बलिश्च होमोऽपि च तन्त्रसिद्धः।
रक्षोघ्नशान्तिश्च यथावदुक्तो बौधायनाचार्यमतं विदित्वा ॥ ७१ ॥

इति श्रीमदीशानशिवगुरुदेवपद्धतौ तन्त्रसारे
वास्तुविद्यापटल एकादशः।

---

## अथ द्वादशः पटलः।

उत्सवेषु विविधेष्वपि दीक्षास्थापनादिषु पवित्रविधौ च।
मङ्गलाङ्कुरविरोपणपूर्वं मङ्गलं भवति कर्म कृतं तत् ॥ १ ॥

शस्तयागदिवसात् तु पुरस्तात् सप्तमेऽहनि शुभे नवमे वा।
पञ्चमेऽपि सुदिने सुमुहूर्ते मङ्गलाङ्कुरविधिं विदधीत ॥ २ ॥

पात्रमत्र विहितं त्रिविधं तत् पालिका च घटिका च शरावम् ।
विष्णुपद्मभवशङ्करदैवं तत्त्रयं पृथगनुक्रमशः स्यात् ॥ ३ ॥
अङ्गुलैः कृतिमितैः स्फुटमुच्चा पालिकावदनविस्तरतोऽपि ।
उत्तमा च यरयाङ्गुलसंख्ये मध्यमाधमविधौ कथिते वै ॥ ४ ॥
पादविस्तृतिरथोर्ध्वमिता स्यात् तत्त्रिभागमितकण्ठबिलं च ।
दण्डवद् भवति शिष्टमशेषं कण्ठतुल्यपरिणाहमनोज्ञम् ॥ ५ ॥
व्याससोच्छ्रयसमा घटिकाख्या तालमात्रमिह पञ्चमुखी स्यात् ।
दिक्षु तन्मुखचतुष्टयमेकं मध्यमं तु समवर्तितभागम् ॥ ६ ॥
तालविस्तृतमुखं तु शरावं तत्समोच्छ्रयमतोऽर्धमिताङ्घ्रि ।
दण्डकस्य चतुरङ्गुलनाहं कण्ठमस्य बिलवर्ज्यमुदग्रम् ॥ ७ ॥
सम्भवे कनकरूप्यकताम्रैर्मार्तिकान्यभिनवान्यथ वा स्युः ।
क्षालितानि सलिलेन निजास्त्रात् सूत्रवेष्टितगलानि निदध्यात् ॥ ८ ॥
शुद्धमृत्सिकतगोमयचूर्णैः पूरितानि कुशकूर्चयुतानि ।
मङ्गलाङ्कुरगृहे सवितानं पात्रकाणि निदधातु मनोज्ञे ॥ ९ ॥
गोमयाद्भिरुपलिप्य तु भूमिं स्वाङ्गमूलमनुयुक्तजलास्त्रात् ।
प्रोक्ष्य पिष्टपरिरूषितसूत्रैरुक्तलक्ष्मविहिते चतुरश्रे ॥ १० ॥
विघ्ननाथमभिपूज्य पुरस्तात् पुण्यकाहमपि वेदविशिष्टैः ।
वाचयेदधिकमेकमशीतेः स्यात् पदं तु विहितं चतुरश्रे ॥ ११ ॥
मध्यतो नवपदैरथ शुक्लं कर्णिकाष्टदलकेसरशोभि ।
आलिखेत् सरसिजं तु रजोभिः शालिभिः सुविहितोच्छ्रितमध्यम् ॥
तत्र सूत्रविनिवेष्टितकुम्भं धूपितं तु विनिधाय कुशेषु ।
द्वादशान्तगलितामृततोयैः पूरयेत् सकुशकूर्चहिरण्यम् ॥ १३ ॥
पिप्पलाम्रनवपल्लवगन्धैर्माल्यदामकुसुमाक्षतवस्त्रैः ।
शालितण्डुलफलाढ्यविधानं वस्त्रयुग्मकुसुमैरभिरामम् ॥ १४ ॥
मातृकाम्बुजगतं तु कलाभिः षोडशस्वरयुताभिरुपेतम् ।
तं विभाव्य शिशिरांशुसुदंशुं तारकेशमुडुचक्रसमेतम् ॥ १५ ॥

---

१. 'रुच्यक' ग. पाठः.

पूजयेत् तदुपचारविशेषैः पायसं चरुघृतं विनिवेद्य ।
शोभितेषु रजसाथ पदेषु स्थापयेत् तु पृथगङ्कुरपात्रम् ॥ १६ ॥

आदित्ये समरीचे च विवस्वति यमे तथा ।
जलाधिपे च मित्रे च सोमे च पृथिवीधरे ॥ १७ ॥

एषां पदेषु घटिकाः स्थापयेदष्ट वै क्रमात् ।
अग्नौ पूषणि चित्राख्ये दौवारे रोगनागयोः ॥ १८ ॥

अदितावपि चैशाने शरावाण्यष्ट विन्यसेत् ।
एषां मध्यपदेष्वष्टौ दिग्विदिक्क्रमयोगतः ॥ १९ ॥

स्थानानि पालिकानां तु कथितान्यष्ट विन्यसेत् ।
पदान्यादौ विलिख्यैषु शुक्लचूर्णेन पूरयेत् ॥ २० ॥

पृथक् शाल्याढकं क्षिप्त्वा दर्भविष्टरके पृथक् ।
संस्थाप्य घटिकादीनि तेषु बीजानि वापयेत् ॥ २१ ॥

माषमुद्गकुलस्थानि निष्पावतिलशालयः ।
सर्षपो मार्गगोधूमश्यामाकव्रीहयो यवाः ॥ २२ ॥

प्रियङ्गवस्तथाढक्यो वैणवश्चेत्यनुक्रमात् ।
त्रिपञ्चवर्गबीजानि कथितान्युत्तमाङ्कुरे ॥ २३ ॥

वर्गद्वयं मध्यमे स्यादधमे बीजपञ्चकम् ।
बीजानि क्षालयित्वाद्भिः क्षीरेण तदनन्तरम् ॥ २४ ॥

वस्त्रखण्डे दृढं बद्ध्वा दिनमात्रं जले स्थितम् ।
उद्धृत्य यामद्वितये समतीते तु वापयेत् ॥ २५ ॥

बीजानां दैवतं सोमः स रात्रौ कान्तिमान् यतः ।
तस्माद् बुभुक्षुर्बीजानि निशायामेव वापयेत् ॥ २६ ॥

अभिमन्त्र्य हृदा पूर्वं मन्त्रेणानेन वापयेत् ।
ओं त्र्यम्बकाय शर्वाय शङ्कराय शिवाय च ॥ २७ ॥

सर्वलोकप्रधानाय शाश्वताय नमो नमः ।
अनेनैव तु मन्त्रेण सिञ्चेद् हारिद्रवारिणा ॥ २८ ॥

पञ्चोपचारैरभ्यर्च्य चाच्छाद्य वसनैः सितैः ।
सप्तरात्रं बलिं दद्याद् वक्ष्यमाणक्रमेण तु ॥ २९ ॥

ब्रह्मभूतेन्द्रगन्धर्वयक्षरक्षःपिशाचकाः ।
गणा बलिभुजः सप्त क्रमात् तन्नामलक्षिताः ॥ ३० ॥

सान्नपुष्पकुशं ब्रह्मरात्रे तु प्रथमे बलिः ।
अन्नं दधि निशाचूर्णं लाजाः सक्तुतिलास्तथा ॥ ३१ ॥

भूतक्रूरमिति ख्यातं भूतरात्रे प्रदापयेत् ।
इन्द्रवल्लीरसोन्मिश्रमन्नं सक्तुपयोदधि ॥ ३२ ॥

इन्द्ररात्रे तृतीये तु बलिं दद्यात् तु देशिकः ।
वैणवान्नं पयोयुक्तं गान्धर्वे स्याच्चतुर्थके ॥ ३३ ॥

पञ्चमे यक्षरात्राख्ये पुष्पान्नाज्याम्बुभिर्बलिः ।
रक्तान्नं सतुषं मृत्स्नायुक्तं षष्ठे तु राक्षसे ॥ ३४ ॥

सप्तमे त्वथ पैशाचे माषान्नं कृसरं मधु ।
हारिद्रचूर्णं तैलाढ्यं सामिषं तु प्रदापयेत् ॥ ३५ ॥

अन्यथा केचिदाचार्याः प्राहुर्वै गुणसप्तकम् ।
तच्चात्र कथ्यते भूताः पितरोऽपि च गुह्यकाः ॥ ३६ ॥

नागा ब्रह्मा शिवो विष्णुर्देवताः सर्वरात्रिषु ।
प्रणवादिनमोन्तैः स्वैर्नामभिर्दापयेद् बलिम् ॥ ३७ ॥

प्रथमे भूतरात्रे तु भूतक्रूरेण दापयेत् ।
तिलैस्तण्डुलमिश्रैस्तु पितृरात्रे द्वितीयके ॥ ३८ ॥

तृतीये नालिकेराम्भः शाल्यन्नैर्यक्षरात्रके ।
सक्षीरपिष्टसक्त्वद्भिर्नागरात्रे चतुर्थके ॥ ३९ ॥

सपद्माक्षान्नमाज्यं च ब्रह्मरात्रे तु पञ्चमे ।
सापूपान्नेन साज्येन षष्ठे शैवे तु दापयेत् ॥ ४० ॥

शुद्धौदनेन साज्येन सप्तमे वैष्णवे बलिः ।
यदा नव स्युर्दिवसाः पायसं कृसरं क्रमात् ॥ ४१ ॥

उद्दिष्टदैवतगणमुद्दिष्टबलिनार्चयेत् ।
न कश्चिदङ्कुराण्यन्यो निरीक्षेत कदाचन ॥ ४२ ॥
आचार्य एव प्रविशेत् तच्छिष्यो वा तदाज्ञया ।
प्ररूढैरङ्कुरैः कर्तुर्निर्दिशेत् तु शुभाशुभम् ॥ ४३ ॥

श्यामैः कृष्णैरङ्कुरैरर्थहानिं तिर्यग्रूढैर्व्याधिमालोहितैश्च ।
कुब्जैर्दुःखं च प्ररूढैर्मृतिं च ब्रूयाद् भग्नैः स्थानदेशेष्टहानिम् ॥ ४४ ॥
शुक्लैः पीतैः संप्ररूढैश्च पूर्णैः शीघ्रोत्पन्नैश्चारुभिर्व्यायतैश्च ।
लक्ष्मीं पुष्टिं चेष्टसिद्धिं[2] समग्रां कर्ता विन्देताङ्कुरैर्मङ्गलं च ॥ ४५ ॥
आचार्यस्तत्राङ्कुरेष्वप्रशस्तेष्वालक्ष्यास्मिंश्छान्तिकं कर्म कुर्यात् ।
मूलेनाङ्गैर्ब्रह्मभिश्चाथ हुत्वा व्याहृत्यन्तं स्यात् तिलैराज्यमिश्रैः ॥ ४६ ॥

इति श्रीमदीशानशिवगुरुदेवपद्धतौ तन्त्रसारे
अङ्कुरार्पणविधिर्नाम
द्वादशः पटलः ।

---

## अथ त्रयोदशः पटलः ।

अथो यागगेहं चतुर्द्वारकोणं चतुस्तोरणाङ्कं वितानध्वजाढ्यम् ।
सगोगोमयाद्भिर्विलिप्तं समन्तात् स्रगालम्बितं तत्सुगन्धं च धूपैः ॥ १ ॥
प्रदीपाङ्कुराढ्यैस्तथा पूर्णकुम्भैरलङ्कृत्य कुण्डं च कृत्वेन्द्रभागे ।
यथालक्षणाढ्यं चतुष्कोणमस्मिन् निधायाग्निमग्नेर्मुखं चात्र हुत्वा ॥ २ ॥
ततो दक्षिणस्यां यजेद् विघ्नराजं समभ्यर्च्य गन्धैश्च भक्ष्यैश्च भोज्यैः ।
गृहे मध्यतस्तत् स्थलं शोधयित्वा चतुष्कोणमस्मिन् विधायोक्तसूत्रैः ॥ ३ ॥
पुनर्व्यष्टधा तद् विभज्यात्र च स्युः पदानां शते द्वे च पञ्चाशता षट् ।
लिखेन्मध्यतोऽब्जं पदैर्व्यष्टसंख्यैर्बहिर्वर्तुलानां त्रयं दर्भसंख्यैः ॥ ४ ॥
अशीत्या पदानां भवेद् राशिचक्रं प्रियायज्ञसंख्यैः पदैरत्र शिष्टैः ।
लिखेद् द्वारशोभाः प्रशोभाः सकोणाः पदैः षट्चतुर्भिश्च वेदर्तुसंख्यैः ॥ ५ ॥

---

१. 'ष्टो' ख. पाठः. २. 'त्वे' क. ख. पाठः.

लिखेद् वर्तुलं तत्तु वीथ्योस्तु मध्ये भवेत् सूत्रकाणां चतुष्कं दिशासु ।
अरा द्वादशैवं तु ते राशयः स्युः समा मातुलुङ्गैस्तु चेन्दीवराभाः ॥ ६ ॥
बहिर्वीथिकायां तु कल्पद्रुमाः स्युर्लताजालपत्रैः फलैः पक्षिभिश्च ।
यथास्थानशोभं तु पद्मोत्पलाद्यैः समं कोरकैश्चाथ पुष्पैश्च गुच्छैः ॥ ७ ॥
चतुर्धा तु पद्मस्थलं भ्रामयित्वा समं कर्णिकार्धं च तत्केसराणाम् ।
तथा सन्धयः स्युर्दलाग्राणि चैवं समान्यष्टपत्राण्यथो वर्तयेत ॥ ८ ॥
सितं शालिपिष्टं तु चूर्णं सुपीतं हरिद्रोद्भवं चाथ रक्तं कुसुम्भम् ।
भवेच्छ्यामवर्णैः पलाशैस्तु तादृक् सुनीलं विदग्धैस्तथा व्रीहिभिः स्यात् ॥ ९ ॥
भवेत् कर्णिका तस्य पीताथ सूक्ष्मा तथा केसराश्चादितः स्थूलमध्याः ।
पिशङ्गास्तदग्रे तु पीतास्तदन्ते सिताः स्युर्दलेष्वेषु ते युग्मशः स्युः ॥ १० ॥
सिताः सर्वरेखास्त्वनामासमानाश्छदान्यच्छचूर्णैश्च रक्तानि चैं स्युः ।
दलानां तु सन्धिर्भवेच्छ्यामवर्णस्त्रिवृत्तानि शुक्लारुणानीलभाञ्जि ॥ ११ ॥
तथा श्यामला वारुणा राशयः स्युः सुपीताश्च वीथ्यां तु तत्सन्धयः स्युः ।
यथाशोभवर्णं तु कल्पद्रुमाः स्युर्विचित्राश्च चक्षुर्मनोज्ञा विधेयाः ॥ १२ ॥
लिखेद् द्वारदेशांश्च शुक्लांस्तु शोभाः कुसुम्भारुणाः स्युश्च पीतोपशोभाः ।
सुनीलेषु शङ्खांस्तु कोणेषु शुक्लान् लिखेत् स्वस्तिकान् वा यथेष्टं मनोज्ञान् ॥
सशिष्यो गुरुः प्रागुपोष्यैकरात्रं कृतस्नाननित्यक्रियः क्षालिताङ्घ्रिः ।
समाचम्य शुक्लोत्तरासङ्गवासाः कृतद्वारपूजाविधिः प्रेरितास्त्रः ॥ १४ ॥
पदा पार्ष्णिघातत्रयं चात्र दत्त्वा पदा देहलीं चास्पृशन् दक्षिणेन ।
प्रविश्योत्तरां त्वन्तराश्रित्य शाखां ततो वास्तुनाथं विधिं चार्चयित्वा ॥ १५ ॥
विधायास्त्रवप्रं तु रक्षां समन्ताद् यथोक्तासने तूपविष्टोऽथ मौनी ।
चरेद् भूतशुद्धिं मरुत्संयमोत्थां गजास्यं तु याम्ये गुरुं चैश इष्ट्वा ॥ १६ ॥
ततो मन्त्रनद्धस्वदेहः शिवात्मा हृदम्भोरुहस्थं शिवं ज्योतिरेकम् ।
मनःसाधितैस्तूपचारैस्तथेष्ट्वा यजेन्नाभिकुण्डेऽनलं मानसेन ॥ १७ ॥
समापूर्य चार्घ्यं समूलाङ्गमिष्ट्वा शिरः स्वं समुक्षेच्च कूर्चार्घ्यतोयैः ।
तथा तैरथोक्ष्यार्चनद्रव्यजातं तथा यागभूमिं च तैः प्रोक्षयित्वा ॥ १८ ॥

---

१. 'वे' ख. पाठः. २. 'पु', ३. 'सुकुम्भम्' ग. पाठः. ४. 'वा' ख. पाठः.

ततः स्थानशुद्धिं तु तालत्रयास्त्रात् प्लुतान्तं पठन् निष्कलान्तं च मन्त्रम् ।
समुच्चार्य खाब्जादथेन्दोः सुताद्भिः समाप्लाव्य वेरं तथास्त्राम्बु शोध्यम् ॥
न्यसेद् वर्धनीं चोत्तरेणाम्बुपूर्णां तथा गन्धपुष्पाक्षतं दक्षिणस्याम् ।
तदर्घ्याम्बुबिन्दुं सगन्धं च पुष्पं क्षिपेन्मूलमन्त्रं जपेद् द्रव्यचक्रे ॥ २० ॥
यथाशक्ति दीपानपि ज्वालयित्वा मनोज्ञान् विशुद्धान् यथोक्तप्रकारान् ।
सुगन्धाक्षताद्यैर्यथोक्तैः पृथग् वा यजेद् वक्ष्यमाणक्रमान्मण्डलं तत् ॥ २१ ॥
तथाधारशक्तिं न्यसेल्लोकधात्रीं मृणालाङ्कुराभां भुवोऽधो यजेत् ताम् ।
ततोऽनन्तमुर्वीमनन्तासनाख्यं चतुष्कोणपीठं तु तद्योगसंज्ञम् ॥ २२ ॥
वृषाकाररक्तं तु धर्माख्यमग्नौ यजेद् ज्ञानसिंहं तु कृष्णाक्षपादे ।
सुपीतं विरागं तथैश्वर्यमच्छं यजेन्मारुतेशस्थभूतद्विपाभौ ॥ २३ ॥
रजः कन्दमुक्तं तमस्तत्र नालं भवेत् सात्त्विकाख्यं सुशुक्लं सरोजम् ।
ततः सूर्यसोमाग्निबिम्बानि वेधोहरीशात्मयुक्तच्छदादीनि विद्यात् ॥ २४ ॥
तथैवात्मविद्या शिवाख्यानि तत्त्वान्यथो मातृकाब्जं यजेत् तद् यथावत् ।
समभ्यर्च्य कुम्भं तु हैमादिकं तं सुधौतं त्रिसूत्र्या समं वेष्टयित्वा ॥ २५ ॥
अवाग् धूपगर्भं न्यसेत् कर्णिकायां सधान्यं सदर्भं सबोधिच्छदायाम् ।
निधायाधरास्यं कलासंख्यगर्भैर्निदध्यात् तु कूर्चं ततः कुम्भपृष्ठे ॥ २६ ॥
निरूप्याथ तस्मिन् स्फुरच्छक्तिमाद्यां प्रपञ्चप्रसूतिं च तत्त्वैरशेषैः ।
तमुत्तानयित्वा घटं तत्र कूर्चं तदाधाय शक्तिं जपन् तारगर्भाम् ॥ २७ ॥
विलोमेन तूक्तैस्ततो मातृकार्णैः स्वपद्मेन्दुबिम्बामृतासारमिश्रैः ।
समं तीर्थतोयैः समापूर्य पूर्वं सवर्णौषधीनां जलेनापि गन्धैः ॥ २८ ॥
अलाभे त्वथासां तु सर्वौषधीनां चतुःक्षीरवृक्षत्वचामम्बुभिर्वा ।
क्षिपेदष्टगन्धान् सुपिष्टान् यथावत् सुगन्धीनि तद्वत् सुपुष्पाणि चैवम् ॥ २९ ॥
शुभं पद्मरागं प्रवालं च वज्रं हरिद्रत्नमुक्तास्तथा पुष्यरागम् ।
विदूरोद्भवं चेन्द्रनीलं विशुद्धं क्षिपेच्चन्द्रकान्तं च कुम्भाधिराजे ॥ ३० ॥

---

१. 'स' ग. पाठः. २. 'ता', ३. 'न्धं', ४ 'वृष्टैः' ख. पाठः.. ५. 'वं' ग. पाठः

नवैर्माल्यपुष्पैरलङ्कृत्य चौतैस्तथाश्वत्थबिल्वैर्दलैः पानसैश्च ।
विशुद्धैर्नवैश्चोन्मुखैः शक्रवल्ल्यां निबध्य स्मरेत् तं तरुं पारिजातम् ॥ ३१ ॥
सुपूर्णं तु पात्रं सितैस्तण्डुलैस्तत्सताम्बूलपूगं निधायास्य वक्रे ।
सुसूक्ष्माम्बराभ्यां सिताभ्यां नवाभ्यामलङ्कृत्य माल्यैश्च गन्धाक्षताभ्याम् ॥
समावाह्य शक्तिं प्रपञ्चप्रसूतिं विशुद्धां च विद्यां चितिं सूक्ष्मरूपाम् ।
पृथङ् मातृकार्णैस्तु तारान्तरस्थैः शतार्धं कलाश्चापि तारप्रसूताः ॥ ३३ ॥
कलास्त्रिंशदष्टौ च पूर्वोदिता याः क्रमात् सन्नियुज्यात् तु शक्तौ घटेऽस्मिन् ।
तथेच्छाक्रियाख्ये पुनर्ज्ञानशक्तिं स्वतन्त्रप्रबोधावभिव्यञ्जयेच्च ॥ ३४ ॥
तथा शक्तिशान्तौ च हंसाख्यजीवं नियुञ्जीत तस्मिन् निजाङ्गैश्च मूलम् ।
प्रतिष्ठां च जीवस्य मन्त्रेण कृत्वा समस्तेन्द्रियाणां स्मरेत् सन्निधानम् ॥ ३५ ॥
ऋचः पञ्च याश्च द्विजस्तारकोक्ता नियुञ्जीत हंसः शुचीत्यादिरेका ।
प्रतद्विष्णुरन्या त्वनुष्टुप् तथा तत्पदाद्या च विष्णोर्नुकं चेति पूर्वा ॥ ३६ ॥
तथैवाङ्गमन्त्रैश्च मूलेन युक्त्या नियुञ्जीत तस्मिंस्तु साकारभावम् ।
यथोक्तोपचारैः समभ्यर्च्य सम्यक् स्मरेच्छक्तिमिष्टप्रदां चारुरूपाम् ॥ ३७ ॥
जपापाटलाभां तु दृष्टार्थसिद्धयै सपाशाङ्कुशां चेष्टदाभीतिहस्ताम् ।
विचित्राम्बरस्रग्विपशङ्गानुलेपां लसच्चञ्चलीकप्रभाकेशपाशाम् ॥ ३८ ॥
स्फुटद्रत्नभूषाकिरीटप्रभाभिः पृथक् छत्रचापश्रियं बिभ्रतीं खे ।
प्रपञ्चप्रसूतिं प्रपञ्चात्मिकां तां विचिन्त्यार्चयित्वा हृदम्भोरुहे स्यात् ॥ ३९ ॥
समावाह्य शिष्येष्टमन्त्रानुकूलां स्मरन् देवतां चेष्टरूपादिवर्णाम् ।
विदिक्ष्वङ्गमन्त्रैश्चतुर्भिस्तदस्त्रं न्यसेद् दिक्षु नेत्रं तु मध्येऽर्चयीत ॥ ४० ॥
तदब्जच्छदाग्रस्थशक्तिस्तदुक्ता यजेल्लोकपालांश्च दिक्ष्वस्त्रदेवान् ।
क्रमात् पिङ्गपीता सिता धूम्रशुक्ला मधुच्छायपाण्डुच्छवी शुक्लरक्तौ ॥ ४१ ॥
सरोजप्रभश्चेति लोकाधिपाः स्युर्दशेन्द्रादयश्चाब्जभूशेषयुक्ताः ।
सुपीतं च वज्रं तु शक्तिः सुरक्ता सिताभस्तु दण्डः खड्गवर्णस्तु खड्गः ॥
तडित्कल्प उक्तश्च पाशाङ्कुशः स्यात् सिताभा गदाप्यग्निकल्पं त्रिशूलम् ।
दिनेशाभमब्जं तु चक्रं च तद्वत् क्रमादित्थमुक्तं यथास्त्राग्निवर्णैः ॥ ४३ ॥

१. 'रू', २. 'क्तो', ३. 'पातापङ्गीसि' ख. पाठः.

गणं वीरभद्रं तथा सप्तमातॄर्भजेद् दक्षिणस्यां पिशङ्गं गजास्यम्।
सुनीलं तु भद्रं तथा सप्त मातॄः स्वदेवोपमास्ताः सवाहायुधाद्यैः ॥ ४४ ॥
कुबेरात् तु पूर्वप्रदेशे तु चण्डं तथा क्षेत्रपालं स्ववाहं च पूर्वे।
सतारस्वनाम्ना नमोन्तं यथावत् क्रमेणोपपत्त्योपचारैरिमेऽर्च्याः[1] ॥ ४५ ॥
ततो मण्डलाग्रे न्यसेत् पालिकाद्याः प्ररूढाङ्कुराढ्या यजेद् दिक्षु चैताः।
नवं गव्यमाज्यं चरुं चाथ कृष्णांस्तिलान् शालिसक्तूंश्च सिद्धार्थयुक्तान् ॥
सतारान् लिपेश्चाक्षराञ्छक्तिहंसौ ठयुग्मान्तमुक्त्वा तु तत्तज्जुहोति।
स्वमन्त्रेण चाङ्गैरभीष्टेन हुत्वा महाव्याहृतीश्चेद् द्विजो व्याहृतीश्च ॥ ४७ ॥
चतुष्कर्मबन्धप्रहाणाय मन्त्रं पठन् वक्ष्यमाणं तिलाज्यं जुहोति।
बकोक्तिः सवामाक्षिरग्निः सझण्टीणकारस्तृतीयायुतः प्राणशब्दः ॥ ४८ ॥
जाटटा स्वप्नेण लुप्तेण मनसा वाचा कर्मणा हस्ताभ्यां पद्भ्यामुदरेण शिश्ना यत्
स्मृतं यदुक्तं यत् कृतं तत् सर्वं ब्रह्मार्पणं भवतु ठ ठ ।
अनेनाष्टयुक्तं शतं तत्र हुत्वा बलिं चोत्तरेणाथ पूर्णाहुतिं च।
तिथीनामुडूनां च राशिग्रहाणां स्वनाम्ना नमोन्तं बलिं तत्र दत्त्वा ॥ ४९ ॥
ततस्तत्र शिष्यं विधिस्नानशुद्धं समाचान्तमस्मिन् निवेश्याथ पीठे।
शिरस्यस्य दूर्वाश्च कूर्चाक्षताद्यं निधायैनमिष्ट्वा सुगन्धैश्च पुष्पैः ॥ ५० ॥
पशोरस्य बन्धच्युतिं चेष्टसिद्धिं प्रसीदेति नत्वाथ तद्देवतायाः।
अवाप्याभ्यनुज्ञां तु बिम्बस्थदेवान् समायोज्य कुम्भे स्वयं देशिकस्तम् ॥
कराभ्यां तु बिभ्रत् तमुद्धृत्य तिष्ठन् कुशाग्रेषु शिष्यं निषिञ्चेत् तदद्भिः।
सुषुम्नापथा तत्क्रमाच्छिष्यदेहे स्रवद्वारिधारासुधामिश्रमन्त्रैः ॥ ५२ ॥
स्फुरच्छक्तिदीप्त्याथ तद्देवतायाः प्रवेशो हृदब्जेऽथ तस्याभिचिन्त्यः।
[2]त्रिवाश्यालिमोक्षं तथास्त्रेण कुर्याच्छिवत्वं च नाड्या समापाद्य तस्मिन् ॥
समुत्थाय शिष्यस्तु[3] शुक्लं विशुद्धं दधद् वस्त्रयुग्मं पुनः क्षालिताङ्घ्रिः।
समाचम्य दत्त्वा तु सूर्याय चार्घ्यं[4] नमस्कृत्य गत्वाथ तद्द्वारदेशम् ॥ ५४ ॥

1. 'र्घ्याः' क. पाठः 2. 'त्रिधा श्यामिवार्क्ष' 3. 'स्य' ग. पाठः.
4. 'वा' ख. पाठः

कुशेषूपविष्टो निबद्धाञ्जलिः सन् गुरोराज्ञया तूत्तराशामुखः स्यात् ।
गुरुः प्राङ्मुखस्तूपविश्यार्घ्यतोयैः शिरः प्रोक्षयेच्चास्त्रतस्तस्य दर्भैः ॥ ५५ ॥
शिरस्यस्य भूत्या त्रिराराध्य देहं ततः शोषणाद्यैस्त्रिधा शोधयित्वा ।
पुनर्भूतशुद्धिं च शिष्यस्य देहे स्वयं चित्तवृत्त्या समापाद्य पात्रे ॥ ५६ ॥
विशेषार्घ्यमिष्टार्थं तत्कूर्चतोयैः पुनः प्रोक्ष्य तस्मिन् न्यसेन्मातृकार्णान् ।
ततः साध्यमन्त्रं च तस्याङ्गमन्त्रान् न्यसेन्मूर्तिमत्तां समापाद्य तस्मिन् ॥ ५७ ॥
पुनश्चावकुण्ठ्याथ तं वर्मणाथो स्वमूलाङ्गयुक्तं नवं शुक्लवस्त्रम् ।
समादाय नेत्रेऽस्य बद्ध्वाथ बिम्बे पुरैवेष्टदेवे समभ्यर्च्य तस्मिन् ॥ ५८ ॥
ततः क्षेपयेत् तस्य पुष्पाञ्जलिं तं स यस्यां तु मूर्तौ पतेद् वाङ्गमन्त्रे ।
तदुक्तं हि नाम्नास्य मन्त्रं च तस्मै प्रदद्यात् त्रिवारं पठेत् सोऽपि मन्त्रम् ॥
ततस्तारपीठे तु दर्भासनस्थः समालोक्य शिष्यं तु मूलाङ्गजापी ।
स्वहस्तं शिरस्यस्य विन्यस्य मन्त्रं निधायाङ्गमूलैः स्पृशेत् सर्वमङ्गम् ॥ ६० ॥
ततो दर्भमूलं तु शिष्यस्य हस्ते प्रदायोपविष्टः पुराग्रेस्तदग्रम् ।
स्वजङ्घान्तरस्थं निपीड्यात्मनोऽस्मिन् क्रमाज्जीवनाड्योश्च सन्धिं विदध्यात् ॥
इडापिङ्गलाख्यस्वनाड्योः स्वनस्तः सुषुम्नापथा(चाऽचा)पि मूर्ध्नः प्रसूतम् ।
त्रिधा यत्तु तेजस्तथा शिष्यदेहेऽप्यविच्छिन्नसन्धिं तु जीवं विभाव्यात् ॥६२॥
समानीय शिष्यात्मनोरेकभावं घृतेन त्रिवारं तु मूलेन हुत्वा ।
तथा शिष्यजीवं तथात्मप्रविष्टं पुनर्निर्गतं चास्य देहं प्रविष्टम् ॥ ६३ ॥
भवेदात्मजन्मैवमुद्धाव्य शिष्यः स्फुटं शक्तिपातात् स्वतुल्यः शिवः स्यात् ।
हरित्कीटकं यन्मृदावेष्ट्य नादं विकुर्वन् षडङ्घ्रिः स्वजातिं करोति ॥ ६४ ॥
तथा प्राकृतं शिष्यमाचार्यवर्यः क्रियादीक्षया मन्त्रमूर्तिं करोति ।
ततोऽष्टौ शतं चापि मूलेन हुत्वा दशांशेन चाङ्गैर्घृतेनैव पञ्च ॥ ६५ ॥
द्विजश्चेज्जयादिं जुहोतीह पूर्णां समूलाङ्गमन्त्रैः समस्तैर्जुहोतु ।
समित्क्षीरलाजैश्च सिद्धार्थगव्यैस्तिलैः सर्पिषाज्यैश्च मूलेन हुत्वा ॥ ६६ ॥

---

१. 'ष' ग. पाठः. २. 'य' ३. 'व्यम् ॥' ख. पाठः. ४. 'व', ५. 'तु', ६. 'शाङ्गेन' ग. पाठः.

द्विजः श्रौतमन्त्रैः स्वसूत्रोक्तमार्गाज्जुहोतीह सर्पिर्यथा निष्कृतिः स्यात् ।
प्रायश्चित्तं मूलतस्त्वद्विजानां हुत्वा चाष्टौ विंशतिं चापि मन्त्री ॥ ६७ ॥

जातिं तस्याथोद्धरेद् वक्ष्यमाणैर्मन्त्रैराज्यस्याहुतीनां त्रयेण ।
तारः शक्तिं मूलमन्त्रो निजायां
भगवन्नस्यात्मनो योनिर्बीजाहारभावदेशशुद्धौ द्विजो भवतु मन्त्रदेहः ठठ ।
तस्मादूर्ध्वं व्याहृतीभिश्च हुत्वा ॥ ६८ ॥

भगवन्नस्यात्मा मन्त्रात्मको भवतु ठठ ।
हुत्वानेनाप्याहुतीस्तत्र तिस्रो भूयो हुत्वा व्याहृतीरत्र पश्चात् ।
अस्त्रेणैनं प्रोक्ष्य सन्ताड्य सद्यो रेचादन्तः संप्रविश्यास्य पाशान् ॥ ६९ ॥

विश्लेष्यास्माच्छेदयेदप्यथास्त्रान् मुद्रां बद्ध्वा त्वङ्कुशाख्यां पुनश्च ।
यश्चैतन्यं शिष्यदेहस्थमस्मादाकृष्येन्दौ द्वादशान्ते नियोज्य ॥ ७० ॥

इष्टेऽम्भोजे हृद्गते पूरके तु स्वात्मन्येतद् योजयेत् कुम्भकेन ।
समरसं तु नयेदथ रेचकान्मनुजभावमपास्य शिवात्मकम् ॥ ७१ ॥

स्मरतु हंसजपादभिपूज्य तत् पुनरुदस्य तु शिष्यहृदं नयेत् ।
नाडीमार्गाच्छिष्यहृत्पङ्कजे तच्चैतन्यं तु स्थापयित्वा स्वपश्चात् ॥ ७२ ॥

सूतैरिन्दोः सौधधाराम्बुपूरैराप्लाव्यैनं मन्त्रदेहं विभाव्य ।
अनामयं शिष्यमलुप्तशक्तिं विचिन्त्य विन्यस्य तु मातृकार्णान् ॥ ७३ ॥

तदिष्टमूलाङ्गनिविष्टदेहं विधाय तं बालतनुं तनूजम् ।
जातकर्मादिकं तस्य कुर्यात् ततो मूलतस्तत् क्रमात् स्यात् त्रिवारं पृथक् ।
साङ्गमूलं जपंश्चोपवीतेन तं योजयेत् तद्गतैश्चोदितैर्मूलतः ॥ ७४ ॥

मूलतस्तर्पयेत् पावकं शक्तितस्तत्र पूर्णां पुनश्चापि हुत्वा गुरुः ।
सामयाचारिकान् धर्मसेतूनमुं श्रावयेत् तान् यथा पालयेत् साधकः ॥ ७५ ॥

इत्थमाचार्यतो मन्त्रदीक्षामसौ सप्तजन्मांहसां शोधनीमिष्टदाम् ।
जप्यहोमार्चनामन्त्रसिद्धिप्रदां प्राप्य सद्यः सुधीः स्यात् कृतार्थश्चिरम् ॥ ७६ ॥

इति श्रीमदीशानशिवगुरुदेवपद्धतौ तन्त्रसारे
मन्त्रदीक्षापटलस्त्रयोदशः ।

---

## अथ चतुर्दशः पटलः ।

अथाग्नेयास्तु कथ्यन्ते कल्पाः सङ्कल्पितार्थदाः ।
वैदिकः प्रथमः कल्पः शैवो वैष्णव एव च ॥ १ ॥
काम्यश्चेति चतुर्धाग्नेः कल्पाः स्युस्तन्त्रचोदिताः ।
नित्यं नैमित्तिकं काम्यं साध्यं यत् कर्म वैदिकैः ॥ २ ॥
द्विजैस्तु वैदिकैर्मन्त्रैस्तत् सिध्येद् वैदिकाग्निना ।
शैवागमोदितं कर्म शैवैर्मन्त्रैरथापि यत् ॥ ३ ॥
कृतं पाशुपताद्यैश्च शैवोऽग्निस्तत् प्रसाधयेत् ।
वैष्णवं कर्म तन्मन्त्रैः साधयेद् वैष्णवाग्निना ॥ ४ ॥
पुरुषार्थचतुष्कं यत् काम्यकर्माणि यानि षट् ।
तानि संसाधयेदग्निर्मन्त्रैर्वैदिकतान्त्रिकैः ॥ ५ ॥
द्वात्रिंशद्भेदभिन्नोऽग्निर्द्वात्रिंशत्कर्मभेदितः ।
इत्थमाथर्वणविदां ख्यातमङ्गिरसां मतम् ॥ ६ ॥
लौकिकः पावकोऽग्निः स्यान्मरुत्तो गर्भधारणे ।
पवमानः पुंसवने सीमन्ते मङ्गलाह्वयः ॥ ७ ॥
तुङ्गे तु शोभनो नाम प्रबलो जातकर्मणि ।
पार्थिवो नामकरणे भद्रो निष्क्रमणे मतः ॥ ८ ॥
शुचिरन्नाशने प्रोक्तः सभ्यश्चौले समीरितः ।
जातवेदा ह्युपनये संभवः स्याद् व्रतत्रये ॥ ९ ॥
गोदाने नामतः सूर्यः सौम्यो व्रतसमर्पणे ।
आवसथ्यो विवाहे स्यादन्वाहार्ये महेश्वरः ॥ १० ॥
विष्णुराहवनीये तु ब्रह्मा स्याद् गार्हपत्यके ।
प्रायश्चित्ते वीतिहोत्रः पूर्णाहुत्यां मृडाह्वयः ॥ ११ ॥
क्रव्यादः शवदाहे तु समुद्रे वडवामुखः ।
वर्धनो वनदाहे तु क्षये संवर्तको मतः ॥ १२ ॥
वरदः शान्तिके प्रोक्तः पौष्टिके बलवर्धनः ।
उत्सादोच्चाटयोर्धूम्रः कृष्णो विद्वेषणे मतः ॥ १३ ॥

वश्ये तु कामदो नाम मारणे शोषणाह्वयः।
पिङ्गलः स्तम्भने नाम्ना जठरे जाठरो मतः॥ १४॥

द्वात्रिंशदग्निभेदाधिकारः।

---

शुचौ देशे तु कुण्डे वा स्थण्डिले वा यथोदिते।
गोमयालेपिते हेमरूप्यताम्रमयादिना॥ १५॥
शकलेनोद्धृतां भूमिं प्रोक्षयित्वाथ वालुकाः।
प्रक्षिप्यारत्निमात्रं तु चतुरश्रं विधाय तु॥ १६॥
उल्लिखेत् त्रिःशो रेखाः प्राचीनास्त्रिरुदङ्मुखाः।
न शर्करातृणः काष्ठैर्न लोष्टेन नखेन वा॥ १७॥
नाङ्गारेणापि वा तूष्णीं तत्र ब्रह्माधिदैवतम्।
ब्रह्मजज्ञानमन्त्रेण प्राचीनं मध्यतो लिखेत्॥ १८॥
नाकेसुपर्णात् प्राचीनं दक्षिणे तूत्तरे पुनः।
आप्यायस्वेति पूर्वाग्रं यो रुद्रेत्युदगायतम्॥ १९॥
इदं विष्णुस्तथा पश्चादिन्द्रं वो विश्वतस्परि।
इति प्राच्यामुदीचीनमवोक्ष्य शकलं त्यजेत्॥ २०॥
स्पृष्ट्वाम्भः पात्रगं वह्निं व्याहृतीभिर्निरूप्य तु।
मध्ये प्रणवतः क्षिप्त्वा समाच्छाद्य सदिन्धनैः॥ २१॥
ज्वालयित्वा तु तारेण सदर्भारचिताञ्जलिः।
जुष्टो दमूना इत्यादि पठन् परिसमूह्य तु॥ २२॥
परिषिच्याम्भसा दर्भैः परिस्तीर्य यथोदितैः।
देवस्य त्वेति वै प्राच्यां व्याहृतीभिस्तु दक्षिणे॥ २३॥
उद्वयं तमसः पश्चादग्न आयाहि चोत्तरे।
दक्षिणानुत्तरान् कुर्यादुत्तरानधरानपि॥ २४॥
उत्तरेणाग्निमास्तीर्य दर्भान् पात्राणि सादयेत्।
द्वन्द्वशस्त्वाज्यपात्रं च स्रुवं च प्रोक्षणीः स्रुचम्॥ २५॥

प्रणीतापात्रमिध्मं च चरुस्थालीं च मेक्षणम् ।
बर्हिषः सह कूर्चैरप्यन्यद्धोमोपयोगि यत् ॥ २६ ॥
व्रीहिनिर्वापपक्षे तु मुसलोलूखले तथा ।
शूर्पं कृष्णाजिनं चापि स्यात् सर्वं तदधोमुखम् ॥ २७ ॥
तिर्यक् पवित्रं प्रोक्षण्यामादायापूर्य चाम्भसा ।
अङ्गुष्ठानामिकाभ्यां तत् पाणिभ्यां परिगृह्य तु ॥ २८ ॥
विच्छिद्य त्रिः समुत्पूय पात्राण्यद्भिरवोक्ष्य तु ।
उत्तानयित्वा त्रिः प्रोक्ष्य विस्रस्येध्मादिकं पुनः ॥ २९ ॥
प्रादेशसंमितैर्दर्भैरविच्छिन्नाग्रकैरपि ।
ब्रह्मासनं दक्षिणतः प्रणीतासनमुत्तरे ॥ ३० ॥
आज्यस्थाल्यासनं पश्चात् सङ्कल्प्य ब्राह्मणं शुचिम् ।
ब्रह्मार्थमुपवेश्यास्मिन् कूर्चं वा ब्राह्मणो न चेत् ॥ ३१ ॥
तारव्याहृतिभिर्ब्रह्मन्नादिनावाह्य चार्चयेत् ।
प्रोक्षणीवत् प्रणीतार्थं पात्रमापूर्य चाम्भसा ॥ ३२ ॥
दर्भस्थं दर्भसञ्छन्नमुद्धृत्य घ्राणसम्मितम् ।
ब्रह्मणा समनुज्ञातः स्थापयेत् तत्तदासने ॥ ३३ ॥
वरुणोऽसीत्यथाराध्य व्रीहीन् वा तण्डुलानपि ।
स्रुचा स्थाल्याथवा तूष्णीमन्तर्धायाथ याज्यया ॥ ३४ ॥
अमुष्या इति निर्दिश्य देवतायै तु निर्वपेत् ।
व्रीहींश्चेदवहन्त्येष प्रोक्ष्य त्रिः क्षालयेच्च तान् ॥ ३५ ॥
पात्रेषु पातयेत् पश्चादस्मिन्नग्नौ चरुं पुनः ।
श्रपयित्वा यथोद्दिष्टमभिघार्यावतार्य तु ॥ ३६ ॥
उत्तरेणाग्निमासाद्य स्थाल्यामाज्यं विनिक्षिपेत् ।
निरूह्योत्तरतोऽङ्गारानधिश्रित्याज्यमासने ॥ ३७ ॥
दर्भाभ्यां तदभिद्योत्य चरुं चाम्भः स्पृशेत् पुनः ।
त्रिरभिद्योत्य चाज्येऽथ दर्भाग्रे तु विनिक्षिपेत् ॥ ३८ ॥

सह पर्यग्निकृत्वाग्नौ दर्भाङ्गारान् विनिक्षिपेत् ।
मध्यग्रन्थिपवित्रेण त्रिरुत्पूयाज्यबिन्दुभिः ॥ ३९ ॥

अग्नौ प्रहृत्य प्रक्षाल्य विस्रस्य क्षालितं क्षिपेत् ।
अग्नावथ चतुर्दर्भान् स्रुक्स्रुवौ चोच्छ्रिताननौ ॥ ४० ॥

गृहीत्वाग्नौ विनिष्टप्य त्रिस्तैः संमार्जयेत् पुनः ।
आवेष्ट्य चाङ्गुलीस्तैस्तु पृथक् स्रुक्स्रुवयोः पुनः ॥ ४१ ॥

अग्रं दर्भाग्रतो मध्यं मध्यतो मूलमादितः ।
परिमृज्यानले दर्भान् क्षिपेत् प्रक्षाल्य तौ पुनः ॥ ४२ ॥

दर्भासने दक्षिणतो निधायाधोमुखौ यजेत् ।
आधाय परिधिं स्थूलं पश्चिमेऽथ कृशं पुनः ॥ ४३ ॥

दीर्घं दक्षिणतो न्यस्य ह्रस्वं सूक्ष्मं तथोत्तरे ।
तथोर्ध्वसमिधौ न्यस्य दक्षिणोत्तरपूर्वयोः ॥ ४४ ॥

रक्षसामपहत्यै स्यादिति सञ्चिन्त्य वै द्विजः ।
अदितेत्यादिना याम्ये प्राचीनं परिषिच्य तु ॥ ४५ ॥

पश्चिमेऽनुमतेऽप्येवमुदीचीनमथोत्तरे ।
सरस्वतेत्यादिनाथ समन्ताद् देवपूर्वकम् ॥ ४६ ॥

सवितः प्रसवेत्युक्त्वा परिषिच्य विचक्षणः ।
ध्यायेदथानलं देवं शक्तिस्वस्तिकपाणिनम् ॥ ४७ ॥

त्रिणेत्रं कुङ्कुमाभासं दिव्याभरणवाससम् ।
प्रसन्नवदनं चारुजटामकुटधारिणम् ॥ ४८ ॥

हेममालापरिक्षिप्तं वरदाभयसंयुतम् ।
काली कराली च मनोजवा चैव सुलोहिता ॥ ४९ ॥

सुधूम्राविष्फुलिङ्गिन्यौ जिह्वा विश्वरुचिस्ततः ।
दिक्सप्तकस्थिता ह्येताः क्रमात् पूर्वादितः पुनः ॥ ५० ॥

ऐशान्यां वसुधाराख्या ह्युपजिह्वा हविर्भुजः ।
काल्यां शूद्रस्य कृत्यानि कराल्यामाभिचारकम् ॥ ५१ ॥

भूतग्रहादिरोगाणां शान्तिं कुर्यान्मनोजवा ।
सुलोहितायामपि च शान्तिं कुर्याद् विचक्षणः ॥ ५२ ॥
अम्भोवृष्ट्यादि धूम्रायां द्वेषोच्चाटे स्फुलिङ्गिनी ।
सर्वार्थसाधनी देवी जिह्वा विश्वरुचिर्मता ॥ ५३ ॥
जुहोतु वसुधारायां श्रीकामः पौष्टिकाय वा ।
एवं तु सप्त जिह्वाः स्युर्वसुधारा तथाष्टमी ॥ ५४ ॥
जिह्वाभेदमविज्ञाय होमः स्यान्निष्फलो यतः ।
ज्ञात्वा हविर्भुजो जिह्वाः स्यात् फलासिद्धिर्हुतादिह ॥ ५५ ॥
ततः सिक्त्वा घृतेनेध्मं स्वाहेति जुहुयात् समम् ।
स्रुवेणाज्यमुपादाय परिध्योः सन्धिमुत्तरम् ॥ ५६ ॥
स्पृष्ट्वा चापातयेद् वह्नावृजुधारां प्रजापतेः ।
तथा दक्षिणसन्धिं तु स्पृष्ट्वेन्द्रायेति मन्त्रतः ॥ ५७ ॥
अथाज्यभागौ जुहुयाद् याम्योदक्पूर्वभागयोः ।
अग्नये चैव सोमाय स्यातामस्याक्षिणी तु ते ॥ ५८ ॥
यथोपदेशं तु समं पूर्वेणाग्नेर्मुखे ततः ।
युक्तो वेहादिनाज्येन[1] चतस्रस्त्वादिना तथा ॥ ५९ ॥
आनो भद्राद् विरूपाक्षाद् विरूपाक्षादिना पुनः ।
यातिरश्चीनिपूर्वेण[2] संराधन्यादिना पुनः ॥ ६० ॥
प्रसाधन्या व्याहृतिभिर्हुत्वेत्यभिमुखं भवेत् ।
चरुं तमभिघार्याथ पूर्वार्धाच्चापरार्धतः ॥ ६१ ॥
अवदानद्वयं कृत्वा त्वभिघार्य स्रुचं[3] न्यसेत् ।
अथाभिघार्य जुहुयाद् यथाम्नायं पृथक् पृथक् ॥ ६२ ॥
अथाग्नये स्विष्टकृतेत्युत्तरार्धात् सकृच्चरोः ।
अवदानं जुहोत्यग्नावभिघार्य स्रुचैव तु ॥ ६३ ॥
पूर्वोत्तरार्धे तद्धुत्वा हविरुत्क्षिप्य मेक्षणम् ।
संस्रावेणाभिहुत्वाथ दर्व्यामानीय तज्जलम् ॥ ६४ ॥

---

१. 'प' ग. पाठः. २. 'श्मी' क. पाठः. ३. 'चि' ख. पाठः.

अन्तःपरिधि साध्यांस्तानाम्नातांस्तु पितॄन् स्रुचा।
निनीयान्तःपरिधि वै निर्णिज्याग्नौ प्रताप्य तु ॥ ६५ ॥

पूरयित्वाद्भिरेनां तु बहिःपरिधि सेचयेत्।
प्रहृत्य समिधं तां च या पूर्वं परिशेषिता ॥ ६६ ॥

तथैव चेध्मसंनाहं प्रहरेदुक्षितं ततः।
जयादिं जुहुयात् पश्चात् चित्तंचादित्रयोदश ॥ ६७ ॥

मन्त्रास्ततोऽग्निर्भूतानां मादयोऽष्टादश क्रमात्।
कचित् समावत्वन्तं तु जुहुयादविशेषिते ॥ ६८ ॥

विशेषितेषु कृत्येषु जुहोत्यधिपतिः समाः।
अवत्वस्मिन्पदाद् ब्रह्मन्नस्मिन्क्षत्रेत्युदीर्य तु ॥ ६९ ॥

अस्यामान्ते तु शिष्यस्यांपुरोधायांपदं ततः।
अस्मिन्कर्मन्नवदस्यान्ते देवहूत्यां (च) ठद्वयम् ॥ ७० ॥

समासीकृत्य जुहुयात् क्रमादष्टादशाहुतीः।
ऋताषाडादिभिर्मन्त्रैर्हुत्वा द्वादशभिस्ततः ॥ ७१ ॥

तथामात्याहुतीर्हुत्वा यद्देवा देवहेडनम्।
इत्यादिभिस्त्वमग्नेन्तं जुहुयान्मन्त्रविंशतिम् ॥ ७२ ॥

प्रजापते न त्वदाज्यादिध्मं प्रव्रश्चनं क्षिपेत्।
मनोज्योतिरयाश्चाग्नेर्यदस्मिन् कर्मणीति च ॥ ७३ ॥

स्वस्ति नस्त्वादिकेनाथ यन्म आत्मन इत्यपि।
पुनरन्यादिना हुत्वा व्याहृतीभिस्तथा पुनः ॥ ७४ ॥

आभिर्गीर्भिरनाम्नातं तद्वत् पुरुषसंमितः।
प्रत् पाकत्रा यदस्येति हुत्वा स्विष्टकृतं ततः ॥ ७५ ॥

संमृज्य परिधीन् दर्भान् प्रस्तरेभ्योऽवलुम्पतु।
अग्रमध्यममूलानि त्वाज्यस्थाल्यां निमज्ज्य तु ॥ ७६ ॥

अग्रादारभ्य चोर्ध्वाग्रमामूलमथ दाहयेत्।
न धूनयेन्न बाह्येऽग्नेः प्रक्षिपेद् विकिरेत वा ॥ ७७ ॥

एकीकृत्य शनैः प्रास्येत् पृथक्कृततृणं तथा ।
शम्याश्चेन्न परित्याज्याः परिधिं मध्यमं क्षिपेत् ॥ ७८ ॥
इतरौ युगपत् प्रास्येद्धुत्वोर्ध्वसमिधावपि ।
संस्रावमपि हुत्वाग्नौ परिषेकं विसृज्य तु ॥ ७९ ॥
प्रणीताम्भः प्रतिदिशं तूष्णीं संसेचयेत् तथा ।
प्राच्यां दिश्यादिभिर्मन्त्रैः सेचयेद् वा यथाक्रमम् ॥ ८० ॥
भूमौ शिष्टाः परासिञ्चेद् ब्रह्मणे गां च दक्षिणाम् ।
सत्यां दद्यान्नचेद् विप्रान् भोजयेद् वापि शक्तितः ॥ ८१ ॥
प्राश्नीयाद्धुतशेषं वोदरमायुरिति स्पृशेत् ।
आचम्य यत इन्द्रादिमुत्तरां च जपेत् ततः ॥ ८२ ॥
शेषं दद्याच्छ्रोत्रियायेत्याह बोधायनो विभुः ।

वैदिकाग्निकल्पाधिकारः ।

---

अथ शैवोऽग्निकल्पोऽत्र कथ्यते प्रोक्तलक्षणम् ॥ ८३ ॥
कुण्डं वा स्थण्डिलं वापि समाक्रामन् प्रदक्षिणम् ।
शिवमन्त्रं जपन् होमद्रव्याण्यालोकयन् दृशा ॥ ८४ ॥
गत्वा कुण्डान्तिकं कुण्डयोनिं वीक्ष्योत्तरामुखः ।
आसीत हौं शिवायेति प्रणवादिनमोन्तकम् ॥ ८५ ॥
जपन् निरीक्ष्य तत् कुण्डं खात्वास्त्रेण तु देशिकः ।
शिवाङ्गान्यत्र दृश्यन्ते वक्ष्यमाणक्रियाप्तये ॥ ८६ ॥

ओं हां शिवाय नमो हृदयाय नमः । ओं हीं शिवाय नमः शिरसे स्वाहा । ओं हूं शिवाय नमः शिखायै वषट् । ओं हैं शिवाय नमः कवचाय हुम् । ओं हौं शिवाय नमो नेत्रत्रयाय वौषट् । ओं हः शिवाय नमः अस्त्राय फट् ।

अस्त्रेण खातमुद्धृत्य हृदयेनाभिपूर्य तु ।
तेनैव च पर्यग्निकृत्य चाभ्युक्ष्य कवचेन तु ॥ ८७ ॥

शराणुना कोट्टयित्वा संमार्ज्यालिप्य तेन तु ।

ओं हौं शान्त्यतीतायै नमः । ओं हैं शान्त्यै नमः । ओं हूं विद्यायै नमः । ओं हीं प्रतिष्ठायै नमः । ओं हां निवृत्त्यै नमः ।

इति मध्येन्द्रयाम्याप्यकौबेर्यासु यजेत् कलाः ॥ ८८ ॥

ओं हां कलामयाय कुण्डाय नमः ।

साकल्येन कलात्मानं कुण्डं ध्यात्वाभिपूज्य तु ।
त्रिसूत्र्यावेष्टय तत् कुण्डं ततोऽस्त्रेण कुशेन तु ॥ ८९ ॥

आत्मविद्याशिवैस्तत्त्वैः प्राचीनं त्रिः समुल्लिखेत् ।
उदीचीनं सकृन्मध्ये समिदग्रेण मूलतः ॥ ९० ॥

ब्रह्मा विष्णुश्च रुद्रश्च शिवस्त्वासां तु दैवतम् ।
त्रिभिर्दर्भैरथास्त्रेण वज्रीकृत्य पुनर्हृदा ॥ ९१ ॥

पूर्वोत्तराग्रदर्भाभ्यां कुण्डे कृत्वा चतुष्पथम् ।
इत्यष्टादशसंस्कारैः शुद्धे कुण्डे कुशैः पुनः ॥ ९२ ॥

पटं कुण्डस्य सङ्कल्प्य

ओं हां वागीश्वरीवागीश्वरासनायः नम ।

इति दर्भासनं न्यसेत् ।

ओं हां वागीश्वरीमावाहयामि ।

श्यामामलङ्कृतां देवीं सर्वाभरणभूषिताम् ॥ ९३ ॥
ध्यात्वावाह्य त्वनेनैनामृतुस्नातां समर्चयेत् ।
ततो वागीश्वरं तादृग्रूपमावाह्य रागिणम् ॥ ९४ ॥

संपूज्याग्निं यथोद्दिष्टज्वालाधूमेन्धनैर्विना ।
शरावादिस्थमानीय क्रव्यादांशं त्यजेत् ततः ॥ ९५ ॥

मूलेनावीक्ष्य चास्त्रेण प्रेक्ष्यास्त्रेणाथ वर्मणा ।
अवकुण्ठ्याभिरक्ष्यास्त्राज्ज्योतिराकारवत् स्मरन् ॥ ९६ ॥

ओं हां रौं हां

इत्यादाय ललाटाक्षान्नेत्राग्निं तेन योजयेत् ।
पतत्पतङ्गसङ्काशं नाभिकुण्डोत्थितानलम् ॥ ९७ ॥

रेचकात् पिङ्गलामार्गान्निस्सार्याग्नौ नियोजयेत् ।
भौतिकं दैवतं[1] चेत्थं जाठरं चानलत्रयम् ॥ ९८ ॥
एकीकृत्य षडङ्गेन

ओं रां हृदयाय नमः । ओं रीं शिरसे स्वाहा । ओं रूं शिखायै वषट् । ओं रैं कवचाय हुं । ओं रं नेत्रत्रयाय नमः । ओं रः अस्त्राय फट् ।

तारं हौं शक्तये वषट् ।
इति धेन्वामृतीकृत्य कवचेनावकुण्ठ्य तु ॥ ९९ ॥
संरक्ष्यास्त्राद् धृदाभ्यर्च्य तमुद्यम्य करद्वयात् ।
स्थित्वा जानुद्वयेनाथ कुण्डस्योपरि देशिकः ॥ १०० ॥
क्षोभार्थं त्रिः परिभ्राम्य देवीदेवौ निरम्बरौ ।
ध्यात्वेशानशिरस्कौ तौ

ओं हां शिवबीजाय नमः ।

शिवबीजमिति स्मरन् ॥ १०१ ॥
आत्माभिमुखमग्निं तं देव्या गर्भपथा क्षिपेत् ।
विकीर्णमेकीकृत्यास्त्रान्नाभौ तत्संपुटं नयेत् ॥ १०२ ॥

ओं हां वागीश्वर्यै नमः ।

परिधाप्येति[2] वस्त्रे तु शौचाचमनकेऽपि च ।
कवचेनेन्धनैश्छन्नं पवित्राज्ज्वालयेदमुम् ॥ १०३ ॥

ओं हैं[3] हां गर्भाग्नये नमः ।

इत्यभ्यर्च्याथ संशुद्धं कुशकङ्कणकं करे ।
दक्षिणे तु निबध्नीयाद् वागीश्वर्यास्तु कौतुकम् ॥ १०४ ॥

ओं सद्योजाताय नमः ।

इति सद्यं समावाह्य स्वाहान्तं हृदयेन तु ।
पञ्चाहुतीस्तिलैर्हुत्वा गर्भाधानं समापयेत् ॥ १०५ ॥

ओं हीं वामदेवाय नमः ।

---

१. 'बैन्तवं चे' ख., 'बैन्दवं चे' क. पाठः. २. 'प्य तु व', 'प्ये तु व', ३. 'हौं'

तमावाह्येति शिरसा हुत्वा पुंसवनं भवेत।

ओं हुं अघोराय नमः।

आवाह्यैनं शिखामन्त्राद्धुत्वा सीमन्तसिद्धये॥ १०६॥

ओं हां पुर्यष्टकदेहाय नमः।

जलबिन्दुं कुशाग्रेण देहप्राणकृते क्षिपेत्।

शिखयार्घ्यादिति यावत्।

सद्यादिभिस्तिलैर्हुत्वा वक्त्राङ्गानि च कल्पयेत्॥ १०७॥

वक्त्रनिष्कृतिनिष्पत्त्यै पुनः पञ्चाहुतीस्तथा।

हुत्वा प्रसूतां वागीशीं शिशुमग्निं च संस्मरेत्॥ १०८॥

ओं हें तत्पुरुषाय नमः।

आवाह्य पुरुषं त्वेवं वर्मणाहुतिपञ्चकम्।

हुत्वास्त्रेणार्घ्यतोयेन बहिरन्तरवोक्ष्य तु॥ १०९॥

दर्भकङ्कणकं त्यक्त्वा सूतकस्य निवृत्तये।

स्नातां विभूषितां देवीं देवं चास्त्राम्बुसेकतः॥ ११०॥

वस्त्रभूषणगन्धाद्यैरलङ्कृत्याथ तौ धिया।

ततः शूलापनोदाय जुहोत्यस्त्रात् पलाशजाः॥ १११॥

वितस्तिमात्राः पञ्चाग्रसमिधो घृतसेचिताः।

उत्तरेण तु दर्भेषु पात्रद्रव्याणि सादयेत्॥ ११२॥

परिस्तरणमप्यत्र कृत्वा वेण्या कुशैरपि।

दर्भासनानि विन्यस्य प्रोक्षण्यै ब्रह्मणे तथा॥ ११३॥

प्रणीतानां च परिधीन् विन्यस्य परिषेचयेत्।

तिरःपवित्रेणापूर्य प्रोक्षणीं सलिलेन तु॥ ११४॥

निवृत्त्यादिकलाभिस्तु परिषिच्य यथाक्रमम्।

दर्भेण शिवगायत्र्या तथा परिसमूह्य तु॥ ११५॥

ओं हां ब्रह्मणे यज्ञाध्यक्षाय नमः।

इति ब्रह्माणमावाह्य द्विजं वा कूर्चमर्चयेत्।

विभाव्यानासमुद्धृत्य तस्याभ्यर्च्य स्वविष्टरे ।

ओं ह्रां विष्णवे यज्ञारिसूदनाय नमः ।

इति कूर्चाहितं विष्णुं प्रणीतायां प्रपूजयेत् ॥ ११७ ॥

ततः परिधिदर्भस्थान् ब्रह्माणं शङ्करं हरिम् ।
अनन्तं च चतुर्दिक्षु तारं ह्रांनामतोऽर्चयेत् ॥ ११८ ॥

लोकेशानपि रक्षार्थं स्वदिक्ष्वाराध्य तु क्रमात् ।
तदस्त्राणि च तद्दिक्षु शिवाज्ञां श्रावयेत् ततः ॥ ११९ ॥

भो भो ब्रह्मेन्द्रविष्ण्वाद्या देवाः सास्त्राः शिवाज्ञया ।
स्वस्यां स्वस्यां दिशि स्थित्वा रक्षध्वं वह्निवासकम् ॥ १२० ॥

स्रुक्स्रुवावपि चादाय निरीक्ष्य सकुशौ हृदा ।
प्रताप्यास्त्रेण संक्षाल्य शिरसोर्ध्वमुखौ हृदा ॥ १२१ ॥
प्रताप्य क्षालयित्वाथ मूलमध्याग्रतः कुशैः ।

ओं ह्रां आत्मतत्त्वाधिपतये ब्रह्मणे नमः । ओं ह्रीं विद्यातत्त्वाधिपतये विष्णवे नमः । ओं हुं शिवतत्त्वाधिपतये रुद्राय नमः ।

इति क्रमेण संमृज्य संक्षाल्याभ्यर्च्य तत्त्रयम् ॥ १२२ ॥

ओं ह्रौं शक्तये नमः ।

इति स्रुचं समाराध्य

ओं ह्रां शिवाय नमः ।

स्रुवं चानेन पूजयेत् ।

त्रिसूत्र्यावेष्टितग्रीवो नो चेद् दर्भेण दक्षिणे ॥ १२३ ॥
कुशासने तौ संस्थाप्य ततो गव्यं नवं शुभम् ।
आज्यं निरीक्षणाद्युक्तचतुस्संस्कारसंस्कृतम् ॥ १२४ ॥
ब्राह्मीं स्वमूर्तिं सञ्चिन्त्य कुण्डोर्ध्वानलकोणके ।
प्रताप्यानेन जुहुयात्

ओं ह्रां ब्रह्मणे स्वाहा ।

पुनरैशे प्रताप्य तु ॥ १२५ ॥

जुहुयाद् विष्णवे चेति विष्णुमूर्तिः स्वयं ततः ।
इति हुत्वा कुशाग्रेण घृतबिन्दुं प्रताप्य च ॥ १२६ ॥

ततो रुद्रतनुर्वह्निं त्रिः परिभ्राम्य तद् घृतम् ।
ओं हां रुद्राय ठठ।
हुत्वानेन कुशाग्रेण योन्यां दर्भेषु विन्यसेत् ॥ १२७ ॥
कुशद्वयाग्रं प्रज्वाल्य घृते प्रक्षिप्य तं हृदा ।
पुनरग्नौ क्षिपेद् दर्भं पवित्रीकरणं तु तत् ॥ १२८ ॥
कवचेन घृतं वीक्ष्य शिष्टं दर्भोल्मुकं क्षिपेत् ।
अग्नौ तद्रञ्जनं हस्तौ प्रक्षाल्यादाय वै कुशम् ॥ १२९ ॥
प्रज्वाल्याज्ये समावर्त्य क्षिप्त्वाभिद्योतनं भवेत् ।
स्वदक्षिणोत्तरौ हस्तौ पक्षौ शुक्लेतरौ स्मरन् ॥ १३० ॥
स्वाङ्गुष्ठानामिकाभ्यां तु प्रोत्तानाभ्यां पवित्रकम् ।
प्राचीनमाज्ये प्रक्षिप्य दक्षिणोत्तरभागयोः ॥ १३१ ॥
आज्ये पूर्वापरौ पक्षौ सोमाप्यायापचयान्[1] स्मरन् (?) ।
पिङ्गलां भावयेच्चेडां सुषुम्नां मध्यतस्तथा ॥ १३२ ॥
ओं हां अग्नये ठठ ।
अनेन दक्षिणाज्यांशात् स्रुवेणाक्षिणि दक्षिणे ।
हुत्वा चामन्त्र्य भागेन
ओं हां सोमाय ठठ ।
वह्नेर्वामविलोचने ॥ १३३ ॥
ओं हां अग्नीषोमाभ्यां ठठ ।
इति मध्वाज्यभागेन हुत्वा ललाटनेत्रके ।
ओं हां अग्नये स्विष्टकृते ठठ ।
इत्याज्यभागत्रितयाद्धुत्वाग्नेर्मुखकल्पना ॥ १३४ ॥
क्रमोऽयं पूर्वपक्षे स्याद् विशेषोऽस्त्यसिते यथा ।
ओं हां अग्नये ठठ । ओं हां सूर्याय ठठ । ओं हां अग्नीषोमाभ्यां ठठ । ओं ओं हां अग्नये स्विष्टकृते ठठ ।
एवं नेत्रत्रयं चाग्नेः स्याद् वक्त्रोद्घाटनं तथा ॥ १३५ ॥

---

१. 'यत स्म' क.. 'यात्मनुत् स्म' ग. पाठः.

आज्ये नाडित्रयाधानं पक्षयोरपि कल्पना ।

अथाङ्गैरभिमन्त्र्याज्यम्

ओं हौं शक्तये वौषट् ।

अनेनाप्यभिमन्त्र्य तु ॥ १३६ ॥

अमृतीकृत्य तद्धेनुमुद्रया वर्मणा पुनः ।

अवकुण्ठ्यास्त्रतो रक्षेदित्युक्ताज्यस्य संस्कृतिः ॥ १३७ ॥

संस्कृताज्यस्य यद् बिन्दुं क्षिपेदन्यघृतादिषु ।

संस्कृतान्येव तानि स्युर्हृदयेनाभिमन्त्रणात् ॥ १३८ ॥

अथ सद्यादिपञ्चास्यं प्रतिवक्त्रं त्रिलोचनम् ।

शिवाग्निं संस्मरेत् सौम्यं सप्तजिह्वान्विताननम् ॥ १३९ ॥

अत्र पौष्करे—

चतुर्मुखेषु चतस्रो जिह्वास्तिस्रो मध्यमे । ताश्च दीक्षाप्रतिष्ठादिषु सात्त्विक्यः क्षुद्रेषु तामस्यः काम्येषु राजस्यः । (इति ।) ताः पूर्वमेवोक्ताः ।

अभयं स्वस्तिकं शक्तिं वरदं दधतं भुजैः ।

शुक्लमाल्याम्बरालेपं दिव्याभरणभूषितम् ॥ १४० ॥

इष्ट्वार्घ्यं गन्धपुष्पाद्यैरुपचारैर्यथाविधि ।

ओं हां सद्योजातमूर्तये ठठ । ओं हां वामदेवगुह्याय ठठ । ओं हां अघोरहृदयाय ठठ । ओं हां तत्पुरुषवक्त्राय ठठ । ओं हां ईशानमूर्धाय ठठ ।

एवं वक्त्राभिघारः स्याद्धुत्वा तत्तन्मुखे पृथक् ॥ १४१ ॥

ओं हां सद्योजातमूर्तये वामदेवगुह्याय ठठ । ओं हां वामदेवगुह्यायाघोरहृदयाय ठठ । ओं हां अघोराय हृदयाय तत्पुरुषवक्त्राय ठठ । ओं हां तत्पुरुषवक्त्रायेशानमूर्धाय ठठ ।

इति वक्त्राणि सन्धाय जुहुयाद् द्वन्द्वशो घृतम् ।

ओं हौं हें हुं हिं हं ईशानतत्पुरुषाघोरवामदेवसद्योजातेभ्यः ठठ ।

इत्यग्निकोणाद् वाय्वन्तं वायोर्नैर्ऋतकञ्चरान्तकम् ॥ १४२ ॥

राक्षसादीशकोणान्तं स्रुवेणाज्यैकधारया ॥
हुत्वा नित्येषु मुख्यत्वात् सद्यस्य वदनस्य तु ॥ १४३ ॥
कुण्डप्रमाणं तद्वक्त्रं ध्यात्वान्येषां तु सद्यके ।
अनुप्रवेशाद् वक्त्राणां वक्त्रैकीकरणं स्मरेत् ॥ १४४ ॥
तथाचोक्तं संहितायां नित्यकर्मणि सद्यके ।
मुख्यमूर्ध्वं स्मृतं वक्त्रं गुणत्वामेतरस्य तु ॥ १४५ ॥ इति ।

आपिच —

नैमित्तिके च काम्ये च यस्य वक्त्रस्य मुख्यता ।
यत्र यत्र समुद्दिष्टं तस्यैकीकरणं परैः ॥ १४६ ॥
तथा मुमुक्षोर्दीक्षाया मुख्यं ह्यूर्ध्वमुखं स्मृतम् ।
दृष्टसिद्ध्याप्तये पूर्वं दक्षिणं क्षुद्रकर्मसु ॥ १४७ ॥
उत्तरं वामदेवाख्यं शान्तिके पौष्टिकेष्टदम् ।
नित्यकर्मसु सद्याख्यं संहितायामितीरितम् ॥ १४८ ॥
एतत्पर्यन्तमुद्दिष्टं जातकर्मसमापनम् ।

ओं हां ईशानाय नमः ।

इतीशानं समावाह्य तिलाज्याहुतिपञ्चकम् ॥ १४९ ॥
हुत्वा नामास्य कुर्वीत

ओं हां शिवाग्निहुताशस्त्वम् ।

इत्युक्त्वाराध्य चानलम् ।

ओं हां वागीश्वरीवागीश्वराभ्यां ठठ ।

अनेनोद्वास्य पितरौ

ओं हौं शिवाय वौषट् ।

पूर्णां हुत्वा त्वनेन तु ॥ १५० ॥

अनाहितशिवे वह्नौ पञ्चसंस्कारसंस्कृते ।
पात्याश्चरुपुरोडाशा धूपाद्यर्थं च रक्षिते ॥ १५१ ॥

यथोक्तं संहितायां —

"पात्याश्चरुपुरोडाशाः पञ्चसंस्कारसंस्कृते ।

अथैकादशसंस्कारानुपनिष्क्रामणादिकान् ।
मूलेन वौषडन्तेन कुर्यात् त्रिस्त्रिर्घृताद्धुतात् ॥ १५२ ॥

तद्यथा — उपनिष्क्रामणान्नप्राशनचौलोपनयनोपाकर्मव्रतसंग्रहणव्रतोत्सर्जनगोदानसमावर्तनविवाहाग्न्याधानानीति यावत् ।

स्रुच्याज्यपूर्णायां चाथ विन्यस्याधोमुखं स्रुवम् ।
स्रुगग्रे पुष्पमाधाय पाणिभ्यां शङ्खमुद्रया ॥ १५३ ॥
श्लिष्टदण्डौ तौ गृहीत्वा समपादतया स्थितः ।
स्रुगग्रे दत्तदृष्टिः सन् मूलेन हृदयादिना ॥ १५४ ॥
वौषडन्तेनाज्यधारां यवमात्रामखण्डिताम् ।
मन्त्रान्ते पातयेदग्नावित्थं पूर्णाहुतिर्भवेत् ॥ १५५ ॥
अनन्तरं भोः शिवाग्ने! त्वदीये हृदयाम्बुजे ।
यागेऽस्मिन् शिवमावाह्य स्वनुज्ञाता यजामहे ॥ १५६ ॥
इति लब्धाभ्यनुज्ञोऽथ स्वासनाङ्गस्वमूर्तिभिः ।
वह्नौ शिवं समावाह्य शिवसन्धानमाचरेत् ॥ १५७ ॥
वह्निस्थशिवनासाग्रनिष्ठ्यूताच्छिन्नतेजसा ।
लिङ्गस्थशिवनासाग्रनिर्गतज्योतिषा सह ॥ १५८ ॥
सन्धानं पिङ्गलानाड्या त्वायागान्तं विभावयेत् ।
अभ्यर्च्याज्यादिभिः प्रोक्तैर्हविर्भिस्तर्पयेच्छिवम् ॥ १५९ ॥
विध्युक्तानलजिह्वायां हूयमानं तु यद्धविः ।
अग्नेः सौषुम्नमार्गेण शिवमूर्ध्नि सुषुम्नया ॥ १६० ॥
सन्धायामृतधाराभिर्हवीरूपाभिरीश्वरम् ।
तर्पयेत यथा स स्यात् प्रसन्नः स्वेष्टदः शिवः ॥ १६१ ॥

**नाडीसन्धानाधिकारः ।**

---

अथाज्यं च तिलाश्चान्नं साज्यं नित्ये हुतं स्मृतम् ।

शिवाद् दशांशमूर्तीनामङ्गानां हविषा हुतम् ।
पर्वसु द्विगुणं नित्याद्धोमतुल्योऽस्तु[1] वा जपः ॥ १६३ ॥

ओं हौं शिवाय स्वाहेति स्ववदानत्रयं चरोः ।
अभिघार्य स्रुचा हुत्वा मूर्त्यङ्गानां सकृत् सकृत् ॥ १६४ ॥

आचामं प्रोक्षणीतोयैर्दत्त्वार्घ्यं चास्त्रमन्त्रतः ।
गन्धैः पुष्पैर्धूपदीपैस्ताम्बूलेनापि तं यजेत् ॥ १६५ ॥

कृत्वाग्निं भस्म चालभ्य नाडीसन्धिं विसृज्य तु ।
बीजादिभिर्व्याहृतीभिर्मूर्त्यङ्गैश्च सकृत् सकृत् ॥ १६६ ॥

हुत्वाज्यमुद्धृत्यास्त्रेण मूर्त्याङ्गानि यथास्थिति[2] ।
शिवे नियोज्य वह्निस्थं शिवं चाग्नेर्हृदम्बुजे ॥ १६७ ॥

सन्निरुध्याथवा रक्षेत् प्रत्यहं विसृजेत् तु वा ।
ओं हौं हैं हूं हीं हां शिवमूर्तये नमः ।
इत्यग्नेः शिवमूर्तिं तां सङ्गृह्य कुसुमाञ्जलौ ॥ १६८ ॥

ओं हौं, ओं हों, ओं हें, ओं हुं, ओं हिं शिवाय नमः ।
अनेन लिङ्गस्थशिवे योजयेद् वा हृदम्बुजे ।
प्रागेव नाडीसन्धानं सति लिङ्गे तु तच्छिवे ॥ १६९ ॥

अलिङ्गे स्वहृदम्भोजे शिवात् तन्नासिकाग्रतः ।
सन्धानमाचरेत् तद्वदुद्वासनकल्पना ॥ १७० ॥

नैमित्तिकेषु कृत्येषु द्विजातिश्चेज्जयादिभिः ।
अमात्यनिष्कृतीश्चैव हुत्वा स्विष्टकृतं तथा ॥ १७१ ॥

ओं हां अग्नये ठठ । ओं हां सोमाय ठठ । ओं हां अग्नीषोमाभ्यां ठठ । ओं हां अग्नये स्विष्टकृते ठठ ।

मन्त्रैरेभिश्च जुहुयादेभिरेवाद्विजातिषु ।
आग्नेये वा पुरो वाग्नेः कृत्वा मण्डलकद्वयम् ॥ १७२ ॥

बलिं क्षिपेन्नमोन्तैः स्वैस्तारहृत्पूर्वनामभिः ।
चरुशेषेण गन्धाद्यैर्दिग्विदिक्क्रमयोगतः ॥ १७३ ॥

---

1. 'स्तु' ख. पाठः.  २. 'तिः' क. ग. पाठः.

रुद्रमातृगणानां च यक्षग्रहसुरद्विषाम् ।
रक्षसामपि नागानां प्रागीशानादिकं क्रमात् ॥ १७४ ॥
नक्षत्राणां च तन्मध्ये चैतेषां मध्यतः पुनः ।
राशिभ्यः पुनरीशान्ते वह्नौ विश्वेभ्य इत्यपि ॥ १७५ ॥
नैर्ऋत्यां क्षेत्रपालाय दुर्गायै वायुगोचरे ।
एवमन्तर्बलिं क्षिप्त्वा द्वितीये मण्डले पुनः ॥ १७६ ॥
इन्द्रादिभ्यो यथापूर्वं दशदिक्षु बलिं क्षिपेत् ।
विसृज्यैतान् पुनर्बाह्ये मण्डलादेर्बलिं क्षिपेत् ॥ १७७ ॥
सर्वतो विकिरन् दिक्षु

वायसादिभ्यः समयभेदिभ्यः ठठ ।

बलिमन्त्रानथो हरेत् ।
पुनः प्राङ्कणभागान्ते मण्डले तु बलिं क्षिपेत् ॥ १७८ ॥
ये रुद्रा रौद्रकर्माणो रौद्रस्थाननिवासिनः ।
सौम्याश्चैव तु ये केचित् सौम्यस्थाननिवासिनः ॥ १७९ ॥
मातरो रौद्ररूपाश्च गणानामधिपाश्च ये ।
सर्वे सुप्रीतमनसः प्रतिगृह्णन्त्विमं बलिम् ॥ १८० ॥
सिद्धिं यच्छन्तु मे क्षिप्रं भयेभ्यः पान्तु मां सदा ।

"सर्वेभ्यो भूतेभ्यो नमः" इति बलिं क्षिप्त्वा पुनश्च

योगिन्यो भीषणा रौद्रा वेताला ब्रह्मराक्षसाः ॥ १८१ ॥
आगत्य प्रतिगृह्णन्तु शिवेच्छानुविधायिनः ।
मया दत्तं बलिं क्षिप्रं भयेभ्यः पान्तु मां सदा ॥ १८२ ॥

"ओं हां हः हुं फट् ।" अनेन च बलिं क्षिपेत् ।

दत्त्वा बलिं ततः पादौ प्रक्षाल्याचम्य वाग्यतः ।
नमस्कृत्य महादेवं कर्म कुर्याद् यथोत्तरम् ॥ १८३ ॥

**शैवाग्निकल्पाधिकारः ।**

---

अथ वैष्णवकल्पोऽग्निः कथ्यते तन्त्रचोदितः ।
स्नातो धौताङ्घ्रिराचान्तः प्राणानायम्य वाग्यतः ॥ १८४ ॥
रेखास्तिस्रोऽथ पूर्वाग्रास्तिस्रश्चोदङ्मुखा लिखेत् ।
द्वादशाक्षरविद्यां तु जपित्वा तु यथाक्रमम् ॥ १८५ ॥
निरस्य शकलं धौतपाणिः सम्प्रोक्ष्य विद्यया ।
करदेहाङ्गविन्यासान् कृत्वा तारमनुस्मरन् ॥ १८६ ॥
तत्रावाह्य परां शक्तिं लक्ष्मीमृतुमतीं स्मरन् ।
स्नातामलङ्कृतां विष्णुं तथैवावाह्य तौ यजेत् ॥ १८७ ॥
आरणेयाग्न्यन्यतमं शरावादिस्थितानलम् ।
आनीतं तारतोऽवोक्ष्य विष्णोर्बीजमनुस्मरन् ॥ १८८ ॥
देव्या योनौ विनिक्षिप्य गर्भं ध्यात्वेन्धनैरमुम् ।
उद्दीप्यविद्यया प्राग्वदद्भिः परिसमूह्य तम् ॥ १८९ ॥
दर्भेषु पात्राण्यासाद्य परिस्तीर्य यथाक्रमम् ।
प्रोक्षणीमद्भिरापूर्य द्वादशाक्षरविद्यया ॥ १९० ॥
तस्यामावाह्य तु हरिं तज्जलैः प्रोक्ष्य तान्यथ ।
उत्तानयित्वा पात्राणि विस्रस्येध्मं च वेधसम् ॥ १९१ ॥
दक्षिणे प्राग्वदावाह्य संपूज्योत्तरतः पुनः ।
प्रणीताः पूरयित्वाद्भिः प्राग्वद् विन्यस्य तत्र तु ॥ १९२ ॥
साङ्गं विष्णुं समावाह्य संपूज्याज्यं निरूप्य तु ।
श्रपयित्वोत्तरेऽङ्गारे त्रिरभिद्योत्य तं कुशैः ॥ १९३ ॥
त्रिरुत्पूय निधायाग्रे सदर्भौ स्रुक्स्रुवौ पुनः ।
प्रताप्य क्षालयेत् तारात् परिमृज्याग्रमग्रतः ॥ १९४ ॥
मध्यं मध्येन मूलं तु मूलेनाग्नौ क्षिपेत् कुशान् ।
परिधीनूर्ध्वसमिधौ प्राग्वद् विन्यस्य विद्यया ॥ १९५ ॥
परिषिच्येध्ममादाय घृतेनावोक्ष्य तारतः ।
सकृद्धुत्वा तथाघारौ हुत्वा तु द्वादशाक्षरात् ॥ १९६ ॥
गर्भाधानादिकर्माणि तिलैः प्रत्याहुतित्रयम् ।
हुत्वा प्रणवतस्तस्य पितरौ तौ विसृज्य तु ॥ १९७ ॥

हेमपीठाम्बुजे वह्नेर्मूर्तिं ध्यायेच्च वैष्णवीम् ।
पञ्चवक्त्रं चतुर्बाहुं हेमवर्णं त्रिलोचनम् ॥ १९८ ॥
तस्य पृथ्वी भवेत् पादौ द्यौः शिरस्त्वसवोऽनिलः ।
चक्षूंषि सूर्यः खं क्रोडं जिह्वाः सप्त जगन्ति ताः ॥ १९९ ॥
हृदये गार्हपत्यः स्यान्मुखेष्वाहवनीयकः ।
अन्वाहार्यो भवेत् कुक्षौ वेदा वक्त्राण्यनुक्रमात् ॥ २०० ॥
ऋङ्मयं प्राङ्मुखं हेमवर्णं दैविकसाधनम् ।
भिन्नाञ्जननिभं याम्यं याजुषं क्षुद्रकर्मकृत् ॥ २०१ ॥
पश्चिमं तूदयार्काभमाथर्वं शान्तिके मतम् ।
उत्तरं साम चन्द्राभं काम्यकर्मप्रसाधनम् ॥ २०२ ॥
सर्ववेदमयं त्वूर्ध्वं स्फटिकाभं विमुक्तिदम् ।
एवं ध्यात्वाभिपूज्यैनं तदीये हृदयाम्बुजे ॥ २०३ ॥
वासुदेवं चतुर्बाहुं शङ्खचक्रगदाधरम् ।
यथोक्तरूपमावाह्य संपूज्योच्चैर्जुहोति च ॥ २०४ ॥
जयादिभिर्द्विजातिश्चेद्धुत्वा स्विष्टकृतं तथा ।
समापयेच्च तत् कर्म दत्त्वा तद्ब्रह्मदक्षिणाम् ॥ २०५ ॥
उत्सृज्याथ प्रणीताश्च तद्वत् परिधिविष्टरान्[1] ।
बेरे वा स्वहृदब्जे वा प्रवाह्याग्निस्थमच्युतम् ॥ २०६ ॥
अग्निं चापि यथापूर्वं साङ्गोपाङ्गं प्रवाहयेत् ।

**वैष्णवाग्निकल्पाधिकारः ।**

---

कल्पोऽथ मान्त्रिको वह्नेरशेषार्थप्रसाधकः ॥ २०७ ॥
कथ्यते स्थण्डिलं वापि कुण्डं वा प्रोक्तलक्षणम् ।
गोमयालेपितं तारादुद्धृत्य शकलेन तु ॥ २०८ ॥
समीकृत्योपलिप्याथ हैमादिशकलेन तु ।
मध्ययाम्योत्तरा रेखास्तिस्रः प्राचीनमुल्लिखेत् ॥ २०९ ॥

१. 'त' ग. पाठः.

मध्यापरैन्द्रगा रेखास्ततोदीचीनमुल्लिखेत्।
अवेक्ष्य शकलं त्यक्त्वा सर्वत्र प्रणवं जपन् ॥ २१० ॥
अरणेर्वा मणेर्वाग्निं श्रोत्रियागारतोऽपि वा।
शरावादौ समानीतं निरीक्ष्याभ्युक्ष्य तारतः ॥ २११ ॥
क्रव्यादांशं परित्यज्य प्राङ्मुखो वाग्यतः शुचिः।
जाठरं चै[1]न्दवं चाग्निं भौतिकेऽस्मिन् नियोज्य तु ॥ २१२ ॥
स्नातामृतुमतीं शक्तिमीश्वरं च सिसृक्षया।
सङ्गतावभिपूज्यैतौ शक्तिबीजेन साधकः ॥ २१३ ॥
ईशबीजं विचिन्त्याग्निं शक्तेर्गर्भे विनिक्षिपेत्।
इन्धनाभ्यां तमुत्थाप्य समाच्छाद्येन्धनैस्ततः ॥ २१४ ॥
ओं चित्पिङ्गल हन[2] दह पच सर्वज्ञ आज्ञापय[3]ति ठठ।
अनेन तु पवित्रेण ज्वालयित्वा हुताशनम्।
ओं अग्निं प्रज्वलितं वन्दे जातवेदं हुताशनम् ॥ २१५ ॥
सुवर्णवर्णमनलं समिद्धं सर्वतोमुखम्।
उपस्थानमनेनाथ कुर्यात् पुष्पं च निक्षिपेत् ॥ २१६ ॥
एकैकशस्तु प्रागादिदर्भैरास्तीर्य देशिकः।
परिषिच्य जलैस्तूष्णीमभ्यर्च्याग्निं षडङ्गतः ॥ २१७ ॥
जलबिन्दुं जीवभूतं क्षिप्त्वा प्रणवतोऽनले।
गर्भाधानादिकर्माणि षडङ्गैः स्वैरनुक्रमात् ॥ २१८ ॥
प्रत्याहुतित्रयं हुत्वा परिषिच्याथ तारतः।
दर्भेषूत्तरतो वह्नेः पात्राण्यासाद्य पूर्ववत् ॥ २१९ ॥
तोयसेकदयाधैर्यसंख्यैर्दर्भैर्यथाक्रमम्।
परिस्तीर्य यथापूर्वं प्रोक्षणीं वेधसं तथा ॥ २२० ॥
प्रणीतां चाभिपूज्याग्निं परिषिच्यादितः क्रमात्।
ध्यात्वा हेमासनाम्भोजधवलं केसरोज्ज्वलम् ॥ २२१ ॥

१. 'चै' क. पाठः. २. 'नः' क. ख. पाठः. ३. 'ये' क. पाठः. ४. 'ज्वा' ग.

तदष्टपत्राग्रगता मूर्तयोऽष्टौ हविर्भुजः ।
अग्निः स्यात् प्रथमा मूर्तिर्वैश्वानरहुताशनौ ॥ २२२ ॥
जातवेदा हुतवहो हुतवर्मा ततः परम् ।
तथा देवमुखः सप्तजिह्वश्चेत्यष्टमूर्तयः ॥ २२३ ॥
जातवेदाः सप्तजिह्वो हव्यवाहस्तथापरः ।
अश्वोदरस्तथैवाजस्ततो वैश्वानराह्वयः ॥ २२४ ॥
तद्वत् कौमारतेजाश्च विश्वदेवमुखस्तथा ।
अग्नयेपदपूर्वाः स्युर्मूर्तयोऽष्टौ परे जगुः ॥ २२५ ॥

शक्तिस्वस्तिकसाभयं सवरदं काश्मीररक्तद्युतिं
शुक्लालेपनमाल्यदामवसनं भास्वज्जटामण्डलम् ।
व्यालोलामलहाररत्नमकुटं तं हेमनालोज्ज्वलं
ध्यायेत् सौम्यमभीष्टदं हुतवहं त्र्यक्षं प्रसन्नाननम् ॥ २२६ ॥

हिरण्या गगना रक्ता कृष्णाख्या त्वथ सुप्रभा ।
बहुरूपातिरक्ता च सात्त्विक्यः सप्त कीर्तिताः ॥ २२७ ॥
पद्मरागा सुवर्णा च भद्रलोहितलोहिते ।
श्वेता च धूमिनी चैव करालीति रजोन्विताः ॥ २२८ ॥
विश्वमूर्तिस्फुलिङ्गिन्यौ धूम्रवर्णा मनोजवा ।
विलोहिता कराली च काली चेति तमोन्विताः ॥ २२९ ॥
धातुबीजैर्विलोमोक्तैर्वह्निवाय्वू मभूषितैः ।
पूर्वादिदिक्षु जिह्वाः स्युर्वसुधारेशकोणगाः ॥ २३० ॥
दैवेष्वपि च नित्येषु सात्त्विक्यः शान्तिकेष्वपि ।
शस्ताः काम्येषु राजस्यस्तामस्यः क्रूरकर्मसु ॥ २३१ ॥
देवताः पितृगन्धर्वा यक्षनागाः पिशाचकाः ।
क्रमेण जिह्वाधीशाः स्युस्तथैव ब्रह्मराक्षसाः ॥ २३२ ॥
सर्वदेवमयी ख्याता वसुधारोपजिह्विका ।
तस्यां काम्यानि शस्तानि शेषाः स्युर्वैदिकोदिताः ॥ २३३ ॥
प्रणवादिनमोन्तं तु मूर्तीर्जिह्वास्तथार्चयेत् ।

धूमव्यापी सप्तजिह्वस्तथा षष्ठो धनुर्धरः ।
षडेवमङ्गमन्त्राः स्युर्वह्नेर्जातियुताः पृथक् ॥ २३५ ॥
अङ्गानि मूर्तयश्चैव प्रसन्नाः स्युश्चतुर्भुजाः ।
शक्तिस्वस्तिकदोर्द्वन्द्वरुक्माभरणभूषणाः ॥ २३६ ॥
तथेन्द्राद्यांश्च लोकेशानस्त्राणि च बहिर्यजेत् ।
स्वमूर्तिमपि चाग्नेयीं न्यस्ताङ्गां परिभाव्य तु ॥ २३७ ॥
इष्ट्वा गन्धादिभिर्वह्निमाज्यं संस्कृत्य पूर्ववत् ।
स्रुक्स्रुवावपि संमृज्य वैदिकाग्न्युक्तमार्गतः ॥ २३८ ॥
प्राजापत्यादिभिर्मन्त्रैर्वैदिकाग्निमुखं ततः ।
हुत्वाङ्गमूर्तीर्जिह्वानामेकैकाज्याहुतिक्रमात् ॥ २३९ ॥
हुत्वा त्वनेन मन्त्रेण जुहोत्येकाहुतिं पुनः ।
तार व्याहृतयस्तिस्रो वैश्वानरपदं ततः ॥ २४० ॥
सोऽपि[1] भाव जातवेद इहावह सर्वकर्माणि साधय ठठ ।
व्याहृत्यादिमिमं मन्त्रं मूलमग्नेर्विदुर्बुधाः ।
ऋषिः स्यात् सविता छन्दो दैवीगायत्रसंज्ञितम् ॥ २४१ ॥
देवता जातवेदो[2]ऽग्निः समृद्ध्यादौ नियुज्यते ।
महासमृद्धिदो ह्येष जप्यः स्यादयुतं पुरः ॥ २४२ ॥
व्रीहिं न्यग्रोधसमिधस्तिलराज्याज्यपायसैः ।
पूर्वादिदिक्षु हुत्वादौ क्रमात् प्रतिपदादिषु ॥ २४३ ॥
साष्टोत्तरसहस्रं वा शतं वाज्यं जुहोतु च ।
एकादश्यां यथाशक्ति भोजयित्वा शुचीन् द्विजान् ॥ २४४ ॥
रक्तां गां दक्षिणां दत्त्वा सिध्येत् सामृद्धिको मनुः ।
उक्तैर्द्रव्यैः प्रतिपदि पृथक् साष्टकं वा सहस्रं
हुत्वा व्रीहिं जरदमथवा प्रत्यहं रुद्रसंख्यम् ।
व्याघातीयैर्घृतविलुलितैर्वा त्रिपक्षं तथेध्मैः
पालाशैर्वा मधुरमिलितैः स्यात् समृद्धिस्तु पुष्पैः ॥ २४५ ॥

साज्यं गव्यं पायसं वा जुहोतु नित्यं क्षीरं कापिलं गोघृतं वा ।
बन्धूकैर्वा क्षौद्रसिक्तैश्च पुष्पैर्लक्ष्मीकामो मासमष्टौ सहस्रम् ॥ २४६ ॥

क्षीराहारः शोणगोक्षीरहोमी लक्ष्मीं विन्देताक्षयां मासमात्रात् ।
मेधाकामः पौर्णमासीषु लक्षं स्पृष्टं(?) ब्राह्मं वा घृतं प्राश्य विन्देत् ॥२४७॥

लक्षं हुत्वा साज्यदूर्वाङ्कुराणां मृत्युं जित्वा दीर्घमायुश्च विन्देत् ।
हुत्वा चैकामाहुतिं सन्निधत्ते मन्त्रेणादौ चाखिलेष्वध्वरेषु ॥ २४८ ॥

आहवन्त्यादिना प्रातरग्नेस्तिथौ पायसं सर्पिषा साष्टसाहस्रकम् ।
यज्जुहोत्यक्षयामाहवत्येव तद्ब्रह्महेमान्नगास्त्वावहन्तीं श्रियम् ॥ २४९ ॥

अस्यात्यनुष्टुप्छन्दः स्यादृषिरुक्तस्तु काश्यपः ।
भद्राग्निर्देवता प्राग्वदङ्गान्यपि च साधनम् ॥ २५० ॥

प्राजापत्यं पङ्क्तिसहस्रं तु जपित्वा साज्यं दध्ना चौदनहोमादपि लक्ष्मीः ।
आज्या(भ्य)क्तैः शालिहुताद् वा प्रतिपत्सु प्रोक्तैर्द्रव्यैर्व्याहृतिभिर्वा हवनं स्यात् ॥

त्रिष्टुबस्य भवेच्छन्दो मरीचिर्भगवानृषिः ।
प्रजापतिर्दैवतं च साधनाङ्गानि पूर्ववत् ॥ २५२ ॥

उद्धृत्योत्तिष्ठशब्दः पुरुषहरिपदे सार्धचन्द्राक्षिपार्श्वं
खान्तं मांसं च देहिद्वयमपि च ततो वामपादस्य मध्यम् ।
दीर्घोऽत्रिः पार्श्वमन्ते मरुदिति गदितो वह्निजायान्त एषो
वह्नेस्तारद्वयान्तो मनुरखिलजगत्काम्यकल्पद्रुमोऽसौ ॥ २५३ ॥

अस्यच्छन्दस्तु गायत्री मुनिरप्यङ्गिरा भवेत् ।

भृगुरिति केचन ।

देवता स्वयमेवाग्निरश्वरूपी हिरण्यदः ॥ २५४ ॥

नित्यं वा प्रतिपदि वा सकृत्तिकायां शाल्यन्नैर्घृतमिलितैर्जुहोतु लक्ष्म्यै ।
दध्यन्नं घृतमथवा शमीसमिद्भिर्हुत्वेष्टां खलु लभते महासमृद्धिम् ॥ २५५ ॥

हुत्वाज्यं यत् स्वेष्टां लक्षार्धं तां विन्देत् । सरोजैर्हुतैः स्यात् सुलक्ष्यं
[illegible] । [illegible]पलैरिध्मकैः कन्यकां प्राप्नुयात् । घृतव[illegible] विजय लभते ।

ज्योतिष्कतैलेन राष्ट्राणि विन्देत । जपेन जलानि रुजोऽपि हन्ति । यत् खलु सिध्यति तज्जप संपदि यदिह जगति जपतु भवति ।

हैरण्याश्वत्थकल्पद्रुमकुहरगृहान्निष्पतद्वाजिरूपं
रोम्णा कूपोद्गतार्चिष्कपिशितगगनं रन्ध्रदेशैर्धनौघम् ।
ध्यायन् वर्षन्तमग्निं प्रतिपदि जुहुयात् पायसैकाहुतिं स्या-
दर्धप्रस्थाज्यपूर्णाम्बरचषकगतां सोऽचिरादार्थनाथः ॥ २५६ ॥

इति निगदितमग्नेरिष्टदं यद्विधानं
तदभिनियतकाले त्वाहुतीनां समानम् ।
अनुजपतु च मन्त्रं तत्फलाप्त्यै द्विजेन्द्रान्
रसवदिह समग्रं भोजयेन्नित्यशोऽन्ते ॥ २५७ ॥

दशांशविप्रभोजनं तु मुख्यमाहुतिक्रमात्
तथैव पञ्चविंशदंशभोजनं तु मध्यमम् ।
शतांशमप्यथाधमं तु शक्तितस्तदूहयेत्
समासिदानभोजनं च देवताभिपूजनम् ॥ २५८ ॥

तथैव दक्षिणापि मानहेम चाहुतेः स्मृतं
स दैविके तु पौष्टिके वशीकरे च कर्मणि ।
विरञ्जने प्रचाटने निरोधने द्विमानकं
रुजि भ्रमे च सादने त्रिमानकं विनिर्दिशेत् ॥ २५९ ॥

तथैव कृष्णलामितं हिरण्यमेव मारणे
तथाहि तत्त्वसागरे प्रपञ्चके च दर्शितम् ।
दहेद् विहीनदक्षिणाप्रयोगकारिणं नरं
त्वतो न हीनदक्षिणां प्रयोजयेच्च बुद्धिमान् ॥ २६० ॥

इयं हि दक्षिणोत्तमा तु मध्यमाप्यतोऽर्धत-
स्तदर्धतोऽधमा भवेत् तु शक्तितः प्रकल्पिता ।
किमस्य दक्षिणोच्यते यदस्य कर्मणः फलं

अथाभिचारकेषु वह्निकुण्डसाधनादिकं
समुत्सृजेदरेः पुरे तथाम्बुधौ सरित्सु वा ।
करोतु तत्र शान्तिकं सदानधर्मपूजनं
यथा स्वदेहदेशवंशरक्षणं कृतं भवेत् ॥ २६२ ॥

तथैव शान्तिकादिकानि दक्षिणावसानिकं
समाप्य वैदिकाग्निकल्पदर्शितक्रमेण वा ।
निरुध्य दैवतं च वह्निमम्बरेन्दुपङ्कजे
नियोजयेत चामृताम्बुशीकरप्रवर्षिणि ॥ २६३ ॥

इतीह तत्त्वसागरादितन्त्रचोदितो विधि-
स्तथैव वैदिकप्रयोगवृत्तिगृह्यदर्शितः ।
शिवागमोदितश्च यो निरूप्य संप्रदर्शितः
प्रयोगतस्तु साधकैरलं निषेव्यतां सुखम् ॥ २६४ ॥

इति श्रीमदीशानशिवगुरुदेवपद्धतौ तन्त्रसारे
अग्निकल्पविधिर्नाम
चतुर्दशः पटलः ।

## इति सामान्यपादः प्रथमः समाप्तः ।

---

शुभं भूयात् ।